रुक् दुष्टवासनामूलं तद्विद्रावयतीति वा ।
रुक् कुम्भीपाकसम्बद्धस्तद्विद्रावयतीति वा ॥ २६

रुदविद्यानर्थमूलं तद्विद्रावयतीति वा ।
ज्ञातव्योरुद्रशब्दार्थः सर्व श्रुत्यन्तसंश्रुतः ॥ २७

अग्रेप्यस्तु न इत्येवमनुषङ्गो यथोचितम् ।

**उतोत इषव** – इति ।

उतो इत्यपि चेत्त्यर्थे ते तवेषु शरः स्मृतः ॥ २८

**नमस्ते अस्तु धन्वने बाहुभ्यामुतवे नमः ।**

**धन्वन** – इति ॥

सुवर्णाचलरूपाय धन्वने धनुषे नमः ।

**बाहुभ्यां** – इति ॥

बाहुभ्यामुतबाहुभ्यामपि ते तव नो नमः ॥ २९

अनन्तबाहुर्विश्वेशो देवानामप्यगोचरः ।
अतोद्विबाहुरशनः कथञ्चिदिह कीर्त्यते ॥ ३०

अत एव हि बाहुभ्यामिति द्विवचनं मतम् ।
धनुर्बाणान्वितं शम्भोस्तच्चबाहुद्वयं प्रभोः ॥ ३१

ननु मन्यु प्रभृतयो विक्रमेण कयं न ताः ।
नमस्तु ताः क्रमेणैषान्नतौबीजं वदेति चेत् ॥ ३२

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यतः तर्वाणि दुःखानि मन्युकारणकान्यतः ।
आदौ मन्युनमस्कारो युक्त इत्यभिमन्यताम् ॥ ३३

साक्षाद्व्यसनकारित्वादिषवेऽनन्तरं नमः ।
ततो पादान भूताया धन्वने धनुषे नमः ॥ ३४

ततस्तदुभयासक्त बाहुभ्यामिर्ति संगतिः ।
मन्युप्रभृतयस्तस्मात्क्रमेणैव नमस्कृताः ॥ ३५

तस्माद्व्युत्क्रमशङ्कात्र वारितैवेति मन्यताम् ।
ननु देवादिदेवस्य महादेवस्य वस्तुनः ॥ ३६

न मन्युर्नित्य सर्वज्ञे मन्युरसंभावितो विना ।
नथा सति कथं वाक्यं नमस्ते रुद्रमन्यवे ॥ ३७

इति व्याकृतमित्यत्र गृहाणोत्तरमादरात् ।
फलोन्मुखं यदस्माकं दुरदृष्टं कुकर्मजम् ॥ ३८

तद्गोचरं शिवज्ञानं तन्मन्युरिति मन्यताम् ।
यद्वा माहेश्वरं ज्ञानं मन्युकारिकरं यतः ॥ ३९

अतएवोपचारेण मन्युरित्यभिधीयते ।
महेशः कार्यमात्रस्य कर्ताऽतोमन्युकृन्तंतः ॥ ४०

अज्ञानं मन्युकृत्तस्मात्तन्मन्युरितिमन्महे ।
ननु कर्तृत्वमीशस्य कथं कस्मिन्विनिश्चितम् ॥ ४१

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कर्तृत्वं बाधितं तस्य(ा)कर्तारोवयमेव हि ।
अतो न मन्युकृत्तस्मात्तज्ञानश्च न मन्युकृत् ॥ ४२

मानश्चैतस्य कर्तृत्वे नास्तीत्यत्रोच्यते मया ।
भू भूधरादिकं सर्वं कर्तृजन्यं भविष्यति ॥ ४३

कार्यत्वादिति विज्ञेयमनुमानमबाधितम् ।
भू भूधरादि कर्तृत्वं कार्यत्वेनैव हेतुना ॥ ४४

साधनीयन्ततस्तेन सिध्यत्येव महेश्वरः ।
नन्वीश्वरत्वं विज्ञानं रुद्रे मानश्च किं न वा ॥ ४५

तदभावेऽस्य कर्तृत्वं बादितं सर्वदेति चेत् ।
श्रीमद्भास्करवंशीये मयि जीवत्यहोबले ॥ ४६

ईश्वरत्वं महारुद्रे को वा वारयितुं क्षमः ।
ईशानः सर्वविद्यानामित्यादि श्रुतिकोटिभिः ॥ ४७

ईश्वरत्वं महारुद्रे विज्ञानं शुद्धबुद्धिभिः ।
ईशोरुद्रो महादेवः शर्व इत्यादिभिर्मया ॥ ४८

ईश्वरत्वं महारुद्रे ज्ञातं सन्देहमन्तरा ।
अधिकं मत्कृतं सर्वं श्रीमन्न्यायमहामणौ ॥ ४९

विज्ञेयं विस्तरेणालमलमित्युक्तितपल्लवैः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**यातयिषुश्शिवतमेति** ॥ (या त इषुः शिवतमेति)

या तेषुः भक्तिभावेन मया पूर्वं नमस्कृता ॥ ५०

ते तवेषुपदार्थस्तु पूर्वमेव निरूपितः ।
इषुश्शिवतमात्यन्तभक्तसौख्यकरत्वतः ॥ ५१

इषोस्सौख्यकरत्वञ्च शिवद्रोहिविनाशनात् ।
अरौद्ररोदनकरी रुद्रेष्वरत(ति)एव सा ॥ ५२

सर्वदा रुद्रभक्तानां सुखहेतुरितिस्मृतः ।

**शिवं बभूव ते धनुः ।**
**शिवा शरव्या या तव तया नो रुद्र मृडय ॥** इति ।

शिवं बभूव भवति शुभदत्ते धनुश्शिवम् ॥ ५३

पिनाकाख्यन्धनुर्यत्ते तच्छांभव शुभावहम् ।
शिवाशरव्यायिषुधी या तया धनुषा तथा ॥ ५४

नोऽस्मान्मृडय सर्वस्मात्सुखयेशमयेषुणा ॥ ५५

**या ते रुद्र शिवा तनूरघोरेति ॥**

या ते रुद्र शिवा भव्या यद्वा मङ्गलरूपिणी ।
तनुस्तस्मारघोरेयमक्रूराभयदायिनी ॥ ५६

**अपापकाशिनी** ॥ इति ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

अपापकाशिनी सैव यस्मात्पापफलादिकम् ।
स्वतो प्रकाशयन्ती सात्तस्मात्तत्वेन निश्चितम् ॥ ५७

यद्वा पापं महानिष्टं या काशयति जन्तुषु ।
सा पापकाशिनी ज्ञेया तद्भिन्नाऽपापकाशिनी ॥ ५८

**तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशी हि** ॥ इति ।

सैवातिशयानन्त स्वभावा शन्तमा तनुः ।
तया शन्तमयानन्द प्रदयेवेति मन्महे ॥ ५९

गिरौ कैलासनमाद्रौ स्थित्वा भक्ताय शं सुखम् ।
तनोति प्रदद्दातीति गिरिसन्तस्सदाशिवः ॥ ६०

गिरिपक्षाक्षारे तिष्ठन् धैर्यरूपेण शं सुखम् ।
ब्रह्मानन्दन्तनोतीति गिरिशन्तो हि वस्तुतः ॥ ६१

आभ्यामभिमुखेनैव चाकशीहि प्रकाशया ।
.... .... .... .... .... .... .... .... ॥
.... .... .... स्मात् तनुवा तयात्वम् ॥ ६२

महेश्वरानुग्रह दिव्यदृश्येति संप्रार्थनमात्रमर्थः ।

यद्वाशन्तमया तयातिशयितानन्दप्रदात्राधुना
तत्वा(त्त्वं)मामभिलक्ष्यसादरतया रुद्र प्रकासं कुरु ।
अस्यार्थस्तनुरति याति शयितानन्दप्रसादस्मृता
तामेवेश ममप्रकास्य कुरु मां सन्तुष्टामिष्टार्थदः ॥ ६३



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुमना असदित्यन्तमाहवाक्यादतः परम् ।
त्रिपुरज्जवलनोद्युक्तातनुर्घोश प्रसाध्यते ॥ ६४

**यामिषुं गिरिशन्त हस्ते विभर्ष्यस्तवे ।**
**शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥**
**शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।**
**यथा नः सर्वमिज्जगदयक्ष्मँ सुमना असत् ॥** इति ।

हस्ते यामिषुमस्तोवेरिषुपरिक्षेमुं बिभर्षा(र्ष्या)र्यादरात्
ध्धरस्तेषां भयदां शिवाङ्कुरगिरां त्राता गिरित्रेष्टदा ।
मा हिंसीत्पुरुषं शिवैकशरणं तद्धजजगज्जङ्गमं
मा हिंसीर्वचसा शिवेन गिरिश त्वाच्छावदामः स्तुमः ॥

अश्छा(था)भिमुख्येन वदामसीस्तु
यवैनः सर्वमिदं जगत्रयम् ।
तस्यादयाक्ष्मङ्गदसर्वरोग-
मथद्भवेत् स्तुमना प्रसन्नम् ॥ ६६

**अध्यवोचदधिवक्ता** – इति ।

अध्यवोच स्वकीयत्वं भक्तान्प्रतिपदंत्विति ।
व्याख्येयं ब्राह्मणायाधि ब्रूयादितिवदत्र हि ॥ ६७

**अथवक्त्रेति** – इति ।

आधिक्यं वक्तुमर्हत्वात् अथ वक्तेति विश्रुतः ।
तस्मादर्हत्वमेवाह प्रथमेत्यग्रिमात्पदात् ॥ ६८

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**प्रथमोदैव्य इति** ।

प्रधानभूत प्रथमं सुराणां
मध्येति मुख्यो किल देवदेव ।
दैव्योर्थ विज्ञानवतां प्रधानः
स्वभावतस्सर्वपदार्थ वेत्ता ॥ ६९

सर्वन्देवानर्हतीति दैव इत्याभिमन्महे ।
अस्यार्थो रक्षितुं सर्वान् देवान्छक्त इतिस्मृतः ॥ ७०

**भिषक्** – इति ।

भिषक् पापसमुद्भूत सर्वरोग भयापहः ।
भिषक्तमं त्वा भिषजां श्रृणोमीति श्रुतिश्रुतः ॥ ७१

**अहींश्च सर्वाञ्जम्भयन्सर्वाश्च यातुधान्यः ॥** इति ।

अथ ब्रवीतु किं कुर्वन्निति प्रश्नेन तदुत्तरम् ।
अहीन्सर्वान् यातुधान्यो जंभयन्नाशयन्निति ॥ ७२

आह जन्तून् हिंसन्ति अहयोवृश्चिकादयः ।
यातुधानाश्च रक्षांसि घातुका दुर्मदा अपि ॥ ७३

तथाच संहरन्नेतान् युष्मान्संरक्षयाम्यहम् ।
इति शोधि प्रविध्यस्मान्नित्यध्याहार मन्महे ॥ ७४

शम्भोरस्सूर्यस्वरूपत्वमसावादित्यादिका श्रुतिः ।
प्रतिपादयति ध्येयः तद्रूपेणेति सादरम् ॥ ७५

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**असौ यस्ताम्रे अरुण उत वभ्रुः सुमङ्गलः ।**
**ये चेमाँ रुद्रा अभितो दिक्ष श्रिताः सहस्रशो**
**वैषाँ हेड ईमहे ॥**

**अशौ यस्ताम्र** – इति ।

असावायं हि सर्वेषां .... प्रत्स्तु कीदृशः ।
ताम्रोतिरक्तवर्णोयमुदयाचल सङ्गतः ॥ ७६

**अरुण अतवभ्रुः** – इति ।

ईषद्रक्तोरणस्सोयमुदयानन्तरं क्रमात् ।
उतोऽपि च ततो व्यूर्ध्वा बभ्रुः पिङ्गलरूपधृक् ॥ ७७

विश्वं बिभर्ति बोधाद्यैरिति वा बभ्रुरुच्यते ।
बोधाद्यैः प्रजायन्ते यदस्सूर्योदयोत्तरम् ॥ ७८

**सुमङ्गल** – इति ।

अतिमङ्गलरूपत्वात् सन्मङ्गल इति स्मृतः ।
यद्वा विविधवर्णस्सन् अन्धकारादिनाशकः ॥
अतोत्यन्तं मङ्गलेधि सुमङ्गल इति स्मृतः ॥ ७९

**ये चे माँ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषँ हेड ईमहे । इति ।**

रुद्रा रुद्रसमानवेषविभवा ये च प्रसिद्धा गणा
वीरादिष्वभिताः सहस्रश इमां पृथ्वीं श्रितास्संश्रिताः ।
येषां हेम वै महे पुरुषतां संवारयामोर्च्चनाद-
द्रुदानर्चनजासदेकविषयं क्रोधं च नद्यादिभिः ॥ ८०

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**तथा च शिवरहस्ये** :-

भानुमण्डलसंविष्टो रुद्रः सानुचरैस्सह ।
सञ्चरत्यखिलाँल्लोकान् लीलया पालयन् प्रभुः ॥ ८१

पुण्यपापानुरूपन्तु फलं दापयितुं गणाः ।
सहस्रशस्सञ्चरन्तो नानारूपधरास्सदा ॥ ८२

भूतिलिङ्गार्चनादीनि मुक्त्वा ये निवसन्तितान् ।
दृष्ट्वा क्रोधसमाक्रान्तस्स्सञ्चरन्ति गणा भुवि ॥ ८३

कृतलिङ्गार्चनांदृष्ट्वा तुष्टाश्चैते भवन्ति हि ।

**असो योऽवसर्पति नीलग्रीवो विलोहितः ।**
**उतैनं गोपा अदृशन्नदृशन्नुदहार्यः ॥**
**उतैनं विश्वा भूतानि स दृष्ठो मृडयाति नः ॥**

**असौ योऽवसर्पति** - इति ।

असावदित्यसंविष्टो महारुद्रोऽवसर्पति ॥ ८४

असर्ति लोकानां शिक्षणार्थं प्रवर्तते ।
यद्वाऽवसर्पतिश्रीमान् उदयास्तमयादिकम् ॥ ८५

सम्पादयितुमेवा.मसौरुद्रः प्रवर्तते ।

**नीलग्रीवो विलोहितः** - इति :।

नीलग्रीवो कालकूटकालग्रीवो विलोहितः ॥ ८६

ज्वालत्कल्पावसानाग्निसमूहप्रतिमप्रभः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**उतैनं गोपा** – इति ।

सूर्यमण्डलवर्तित्वे किं प्रयोजनमित्यपि ॥ ८७

प्रश्नोत्तरमिहोतैनं गोपा इत्यादिकं स्मृतम् ।
एनं सूर्यात्मकें रुद्रं गोपा गोपालका अपि ॥ ८८

**अदृशन्नदृशन्** – इति ।

अदृशन्परिपश्यन्ति सूर्योयमिति तत्वतः ।

**उदहार्य** – इति ।

उदकाहरणे योग्यास्त्रियो यस्ता अपीदृशम् ।
अदृशन्नुदहार्योऽपि पश्यन्त्यन्येऽपि किं पुनः ॥ ८९·

**उतैनं विश्वा भूतानि** – इति ।

उतापि चैनं भूतानि विश्वं सर्वाण्यपि प्रभुम् ।
अदृशन् परिपश्यन्ति दृष्ट्वा सन्देहमन्तरा ॥ ९०

**शिवरहस्ये :–**

"गोपाश्शूद्रास्तत क्षुद्रा जलहार्योपि तं प्रभुम् ।
विश्वाभूतानि पश्यन्ति सूर्यमण्डलवर्तिनाम्" ॥ इति ॥ ९१

**स दृष्ठो मृडयाति नः** – इति

स सर्वमान संवेद्येदृष्ठोह्यध्यक्षतोऽखिलैः ।
मृडयाति विशेषेण सुखयत्यनिसं च नः ॥ ९२

**नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥**

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमोऽस्तु नीलग्रीवाय** - इति ॥

नीलग्रीवा कण्ठभागो यस्यासौ नीलकन्धरः ।
नीलग्रीवस्तादृशाय नीलग्रीवाय ते नमः ॥ १३

**सहस्राक्षायाय** - इति ॥

सहस्रममितान्यक्षीण्यस्यासौ हि सहस्रदृक् ।
सहस्राक्षस्तदृशाय सहस्राक्षाय ते नमः ॥ १४

**मीढुषे** - इति ॥

मीढुषे मेघरूपेण सक्तो सेचनहेतवे ।
यद्वा पुरुषरूपेण गर्भधात्रे नमोऽस्तु ते ॥ १५

**अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः ।** इति

अधीहि चास्य सत्वानो भक्ता ये प्रमथादयः ।
तेभ्यो नमोकरं भक्त्या करोम्यहमनेकधा ॥ १६

**प्रमुञ्च धन्वनस्त्व-मुभयोरार्त्निर्योज्र्याम्** - इति

त्वमत्य समर्थेश धन्विनो धनुषस्तव ।
उभयोरार्त्निर्योर्कोट्योर्ज्यां प्रमुञ्च वरोपया ॥ १७

याश्चते हस्त इषवो भगवंस्तापरावपाः ।
परित्यज्याशु तूणीरे यथास्थानं प्रवेशय ॥ १८

**अवतत्य धनुस्त्वँ सहस्राक्ष शतेषुधे**
**निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥** इति ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्वं भो सहस्राक्ष शतेषुधे धनु-
स्तवावतत्याश्चवरोप्यशम्भो ।
तथाशुणा(गा)नां च मुखा मुखानि
निशीर्य नोरस्मान् सुमना शुवो भव ॥ ९९

अनन्तेषुधयो बाण इतिकोश शरालयः ।
यस्य सावेव विख्यातशतेषुधिरिति स्मृतः ॥ १००

निशीर्यामुखीकृत्य कृत्वा शीर्णानि वा प्रभो ।
शिवो मङ्गलदो भूत्वा सुमना वरदो भव ॥ १०१

**विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत।**

कपर्दिनो बद्धजटावतो धनु-
र्विजयं गतज्यं भवतु त्रिणेत्र ।
उतोपि चेक्षुश्शितशल्यबाण
इष्वाश्रयोप्यस्तु विशल्य एव ॥ १०२

विशल्यो बाणवागर्भस्सक्तशल्योऽस्तु बाणावान् ।
इदानींगतशल्योऽस्तुशिवः प्राक् बाणवानपि ॥ १०३

**अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥**

**नमोऽस्तु नीलग्रीवाय** - इति ॥

अस्य देवाधिदेवस्य महेशस्येषवः शराः ।
कनेशन्बाणकुहरे भवन्त्वन्तर्हिता द्रुतम् ॥ १०४

**आभुरस्य निषङ्गथिः** ॥ इति ॥

निषङ्गथिः खड्गकोशो यो सावाभूरसत्वरम् ।
क्वाप्यन्तर्हितत्वमस्तु तत्वमस्तु त्वमस्य हि ॥ १०५

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।**
**तयास्मान्विश्वतस्त्वमयक्ष्मया परिब्भुज ॥** इति ॥

मीढुष्टमाभीप्सितकामवर्षिन्
बहूवधाहेतिरभूद्धनुस्ते ।
हस्ते करेस्मान् त्वमयक्ष्मया तया
परिब्भुजाक्ष्वासधयाहि विश्वतः ॥ १०६

अयक्ष्मया भक्तरोगविनिवारिकया तया ।
विश्वतो विविधाकाराद्दुरितात्परिपालय ॥ १०७

**नमस्ते अस्त्वायुधायानातताय धृष्णवे ॥** इति ॥

अनाततायापसृताय धृष्णवे
स्फुरत्प्रभावाय तवायुधाय (च) ।
नमोऽथवा वैरिविषादकारिणे
यद्वा शिवाचाररताय हारिणे ॥ १०८

**उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ।** इति ॥

उभाभ्यामपि बाहुभ्यां नमो तो(तेऽ)पि च धन्वने ।
पिनाकाख्याय धनुषे नमो मेर्वात्मकाय वा ॥ १०९

**परि ते धन्वनो हेतिरस्मन्वृणक्तु विश्वतः ॥** इति ।

ते धन्वनः पिनाकाख्या धनुषो हेतिरस्ति या ।
सास्मान्परिवृणात्वीश विश्वतो हेतिरायुधम् ॥ ११०

हेतिपरिवृणस्त्वस्मान् परिवर्जयितुं प्रभो ।
परितस्सर्वतो यद्वा प्रहारैर्मेव बाधितः ॥ १११



CC-0T Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥** इति ॥

अथोऽन्यच्चेशयालेत्वा यः प्रसिद्धस्त्वेषुधिः ।
आरे दूरेऽस्मदस्मत्तो निधेहि स्थापयाशु तम् ॥ ११२

रुद्रप्रशंसां प्रथमानुवाके-
महोबलो भास्करवंशभानुः ।
व्याख्याय विश्वेशकृपाकटाक्षात्
श्लोकैर्महेशार्पणमेव चक्रे ॥ ११३

यद्दौवारिकवेत्रपात्रममराः सर्वेप्युपेन्द्रादयो-
यत्पादाम्बुजपूजकोऽतिप्रथुकोप्यच्चर्योच्च्युतेन्द्रादिभिः ।
यन्नामामृतपानपूतरसना तुच्छीकृतेन्द्रासना
तं देवं भवमप्रमेयविभवं गौरीधवं भावये ॥ ११४

**इति श्रीमदहोबलकृत श्लोकरूप**
**श्रीरुद्रभाष्ये प्रथमानुवाकः ॥**



**[नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकालाग्निकालाय कालग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः ।]**



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ द्वितीयोऽनुवाकः ॥

**नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः ॥**

**हिरण्यबाहव** – इति ॥

शिवं सुन्दरसर्वाङ्गंक्वणत्कनकभूषणम् ।
नम इत्यादिना ध्यात्वा नमस्कारं करोति हि ॥ १

हिरण्यं कनकं बाह्वोः यस्यासौ हेमभूषणः ।
हिरण्यबाहवे तस्मै महारुद्राय ते नमः ॥ २

**अत्रबाहव** – इति । उपलक्षणमेवहि ।

यतः सर्वाङ्गविलसत्कनकाभरणश्शिवः ।
यद्वा हिरण्यवर्णत्वमनेनेहोपलक्षितम् ॥ ३

अतो हिरण्यरूपत्वं ज्ञेयं श्रुत्युक्तमीश्वरे ।

**सेनान्ये** इति ।

सेनां नयति यो युद्धे स सेनानि(नी)स्तदात्मने ।
कुमारस्वारूपाय सेनान्ये ते नमो नमः ॥ ४

यद्वा सेना भोक्तृवर्गो भोग्यवर्गश्च तं फलैः ।
कर्मानुरूपैर्नयते सेनान्ये ते नमो नमः ॥ ५

**दिशां च पतये नमः** । इति ।

दिशाश्च पतये पत्यै लोकपालात्मने नमः ।
दिक्शब्दः सर्वदिक्प्राची तासां पत्यै नमो नमः ॥ ६

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः ।**

**वृक्षेभ्यो – हरिकेशेभ्यः** – इति ॥

वृक्षेभ्यो हरिकेशेभ्यो वृक्षा ब्रह्मादयस्स्मृताः ।
तद्रूपरुद्रमूर्तिभ्यो नम इत्यत्र योजना ॥ ७

हरिकेशो हरिद्वर्णः केशा ये वर्णलक्षणाः ।
ते येषां ते तथा तेभ्यो वृक्षेभ्य इति योजना ॥ ८

**पशूनां पतये नमः** – इति ।

पशूनां पतये कर्त्रे ब्रह्माद्याः पशवस्स्मृताः ।
तेषां पतिर्महादेवस्तत्वं सर्वत्र निश्चितम् ॥ ९

**शिवरहस्ये :-**

"पिपीलिकान्ता ब्रह्माद्या पशवः परिकीर्तिताः ।
तेषां पतिरुमाकान्तस्ततः पशुपतिश्शिवः ॥" इति । १०

**नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः,**

**सस्पिञ्जर** – इति ॥

सस्पिर्बालतृणन्तद्वत् जरापिञ्जर इत्ययम् ।
सस्पिञ्जरो हरस्तस्मै नमस्सस्पिञ्जराय ते ॥
यज्ञधातुक दुर्वृत्त जरयित्रेऽथवा नमः ॥ ११

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**त्विषीमते** इति ॥

त्विषीमते कान्तिमते दिव्यदीप्तिमते नमः ।

**पथीनां पतये नमः** – इति ।

पथीनां देवमार्गाणां पतिर्यस्मात्प्रवर्तकः ।
ततः पथीनां मार्गाणां पतये स्वामिने नमः ॥ १२

**नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः ॥**

**बभ्लुशाय** – इति ।

बिभर्ति श्रीमहारुद्रं इति वभ्रुर्वृषस्मृतः ।
तस्मिञ्छेते तिष्ठतीति बभ्रशो रुद्र उच्यते ॥
यद्वा पिङ्गलवर्णाय बभ्रुशायेति मन्यताम् ॥ १३

**विव्याधिन** – इति ।

विव्याधिनीनां पतये प्रभवे ते नमो नमः ।
विविधं विध्यति प्राणान् बुभुक्षाद्यैर्यथायथम् ॥
पीडयत्यपराधाद्यैर्जन्तूनिति तथैव च ॥ १४

**अन्नानां** – इति ।

अन्नानामदनीयानां पतये प्रभवे नमः ।
अन्नादानेन जीवानां तर्पयित्रे नमो नमः ॥ १५

CC-0 Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ।**

**हरिकेशायोपवीतिन** – इति ।

हरिकेशो नीलवर्णो कुन्तलो नीलमूर्धजः ।
ताहशाय नमस्तेऽस्तु नमो यज्ञोपवीतिने ॥ १६

**पुष्टानां पतये नमः** – इति ।

पुष्टास्साधुगणा देवाः ब्रह्मद्याः शिवसेवकाः ।
प्रथमाः काश्यपाद्याश्च तेषां च पतये नमः ॥ १७

**नमो भवस्य हेत्यै जगतां पतये नमः ।**

**भवस्य हेत्यै** – इति ॥

भवस्सम्सारहनं तस्य हेतिर्महायुधम् ।
सम्सारछेदिने तस्मै जगतां पतये नमः ॥ १८

**जगतां पतये नमः** – इति ॥

पृथ्व्यादि सर्वलोकानां स्वामिने ते नमोनमः ॥ १९

**नमो रुद्रायाऽऽततताविने क्षेत्राणां पतये नमः ।**

**रुद्राय** – इति ॥

रुद्राय सर्वदुःखस्य द्रावकाय नमोऽस्तु ते ॥ २०

**आततताविन** – इति ॥

आततज्येन धनुषा योवतीदं जगत्सदा ।
स इत तायिने तस्मै . . . . . . . . . . . . ॥ २१

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**क्षेत्राणां पतये नमः** – इति ॥

.... .... .... क्षेत्राणां पतये नमः ।

शरीराणां रक्षकाय .... .... .... ॥ २२

**नमः सूतायाहन्त्याय वनानां पतये नमः ।**

**सूताय** – इति ॥

.... .... .... सूतस्संसार सारथिः ॥ २३

यद्वा जगद्रथस्यास्य नियन्ता वा तथा स्मृतः ।

यद्वा पुराणवक्ता स्यात्तस्मै सूताय ते नमः ॥ २४

**हन्त्याय** – इति ॥

हन्ति क्रिया विषयतां यस्य सो हन्त्य ईरितः ।

नित्यात्मज्योतिरथवा तादृशाय नमो नमः ॥ २५

**वनानां पतये नमः** – इति ॥

अरण्यानि वनानि स्युः तेषां च पतये नमः ॥ २६

**नमो रोहिताय स्थपतये वृक्षाणां पतये नमः ।**

रोहितो रक्तवर्णस्स्याद्गृहनिर्माण पूरुषः ।

खपतिस्स्यान्नमस्तस्मै **वृक्षाणां** पतये नमः ॥ २७

**नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः ।**

**मन्त्रिण** – इति ॥

पञ्चब्रह्मादयो मन्त्राः तद्वते मन्त्रिणे नमः ।

यद्वा मन्त्री गुप्तभाषी .... .... .... ॥ २८

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**वाणिजाय** – इति ॥

.... .... .... वाणिजो वणिगीरितः ।
कदाचित्तत्स्वरूपाय वामिजाय नमोनमः ॥ २९

**कक्षाणां पतय** – इति ॥

गिरिगह्वरगुल्माद्याः कक्षास्तत्पतये नमः ।
यद्वा गहनधर्मारस्युः तेषां च पतये नमः ॥ ३०

**नमो भुवन्तये वारिवस्कृतायौषधीनां नमः ।**

**भुवन्तय** – इति ॥

भुवं तनोति यः साक्षान्नमस्तमै भुवन्तये । ३१

**वारिवस्कृत** – इति ॥

वारिवासः कृतो येन निप्णुना तत्स्वरूपतः ॥ ३२
वारिवस्कृत इत्युक्तो यद्वा स्याद्वारिबोधनम् ।
यद्वा सपर्या तत्कर्ता तादृशाय नमोनमः ॥ ३३

**ओषधीनां पतय** – इति ॥

ओषध्यः फलपाकान्तरस्तासां च पतये नमः ।
यद्वाऽष्टमूर्तिष्वन्यतमा मूर्तिस्स्यादोषधीश्वरः ॥
सोमो नमस्तादृशाय महेशाय नमो नमः ॥ ३४

**नम उच्चैर्घोषायांऽऽक्रन्दयते पत्तीनां पतये नमः ॥**

**उच्चैर्घोषाय** – इति ।

नमस्त उच्चैर्घोषाय गजमेघादिरूपिणे । ३५

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**आक्रन्दयत** – इति ।

युद्ध आह्वानकर्त्रे ते शिवाक्रन्दयिते नमः । ३६

**पत्तीनां पतय** – इति ।

"एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥"
तेषां यद्वा पदातीनां पतये ते नमो नमः ॥ ३७

**नमः कृत्स्नवीताय धावते सत्त्वां पतये नमः ॥**

**कृत्स्नवीताय** – इति ।

येन कृत्स्नं जगद्वीतं भक्षितं व्याप्तमेव वा ।
कृत्स्नं शरीरमथवाऽछादिकं कञ्चुकादिना ॥ ३८
यस्य तस्मै नमः कृत्स्नं वीताय शुभदन्तिने ॥

**धावते** – इति ॥

धातवे भक्तरक्षार्थं नमो वेगेन गच्छते ॥ ३९

**सत्त्वनां पतये** – इति ।

सत्वनां पतये शंभो गणानां पतये नमः ॥ ४०

**॥ ध्यानम् ॥**

मुक्तालंकृतसर्वाङ्गचन्द्रगङ्गाधर त्वया (हरम्) ।
पाहि कल्पतरोर्मूले समासीन सहोमया ॥ ४१
शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युते ।
पाहि सिम्हासनासीनशिवया सहित प्रभो ॥ ४२
द्वितीयोप्यनुवाकोत्र व्याख्यातोयं यथोचितम् ।
अहोबलेन विश्वेश पादपद्मावलम्बिना ॥

**॥ श्रीमदहोबलकृत श्लोकरूप श्री रुद्रभाष्ये द्वितीयोनुवाकः ॥**

******



CC-0T Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ तृतीयोऽनुवाकः ॥

**नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः ॥**

**नमः सहमानाय** – इति ।

नमो हि भवते सर्वं भक्तैद्रोहिकृतं सदा ।
सहमानाय शान्तीनां निधये शंभवे नमः ॥ १

**निव्याधिन** – इति ॥

अतिताडन संशीलो निर्माथीति निगद्यते ।
तस्मै ते परमेशाय महादेवाय ते नमः ॥ २

**अव्याधिनीनां** – इति ॥

तटयिन्यस्त्वभिमुखमाख्यायिन्यः प्रकीर्तिताः ।
तादृशीनान्तु सेनानां पतये स्वामिने नमः ॥ ३

**नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः ॥**

**ककुभाय** – इति ।

ककुभाय प्रधानाय सर्वश्रेष्ठाय ते नमः ।

**निषङ्गिण** – इति ।

खड्गप्रहरसञ्चार कुशलाय निषङ्गिणे ॥ ४

**स्तेनानां पतये** – इति ॥

स्तेनाः प्रच्छन्नवेषेण परद्रव्यापहारिणः ।
तेषामधिपतिस्त्राता यदि भक्ता भवन्ति ते ॥ ५

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ॥**

**निषङ्गिण** - इति ॥

निषङ्गिणे स्वभक्तेषु नितरां सुतरामपि ।
सदा शक्तिमते प्रीत्या वर्तमानाय ते नमः ॥ ६

**इषुधिमत** - इति ॥

इषुधिर्बणकुहरस्तद्वानिषुधिमान् स्मृतः ।
तादृशाय नमस्तेऽस्तु रुद्रेषुधिमते प्रभो ॥ ७

**तस्कराणां पतये** - इति ॥

पश्यतो हारिणस्सर्वे तस्करा इति कीर्तिताः ।
तेषां च पतये भर्त्रे यदि भक्ता भवन्ति ते ॥ ८

**नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ॥**

**वञ्चते** - इति ।

अभक्ति विप्रलम्भाति धिक्कृणे वञ्चते नमः ।

**परिवञ्चते** - इति ।

परितस्सर्वतो व्याप्य गच्छते परिवञ्चते ॥

**स्तायूनां पतये** - इति ।

कपटोत्तमवेषेण परद्रव्यापहारिणः ।
स्तावयत्तत्पतिर्भर्ता यदि भक्ता भवन्ति ते ॥ १०

**नमो निचेरवे परिचरायारण्यानां पतये नमः ।**

**निचेरवे** - इति ॥

नमो निभृतसंचारस्वाभावाय निचेरवे ॥ ११

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**परिचराय** – इति ।

सर्वतश्चारशीलाय नमः परिचराय ते ॥ १२

**आरण्यानां पतये** – इति ।

आरण्यानामरण्यक्ष्मा स्वामिनां पतये नमः ॥ १३

**नमः सृकाविभ्यो जिघागं सद्भ्यो मुष्णतां पतये नमः ।**

**सृकाविभ्य** – इति ।

सृकं तु वज्रमेवेदं शक्तमात्रोपलक्षकम् ।
तदायुधादिवद्भ्योऽस्तु सृकाविभ्यो नमो नमः ॥ १४

**जिघागूं सद्भ्य** – इति ।

सृकाविनो रुद्रगणास्ताहशाय जिघांसतः ।
अभक्तहननोद्युक्ता ताहशेभ्यो नमो नमः ॥ १५

**मुष्णतां पतय** – इति ।

मुष्णतां पतये धान्यवस्त्राञ्चाद्यपहारिणाम् ।
पतये स्वामिने भर्त्रे यदिभक्ता भवन्ति ते ॥ १६

**नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमः ।**

**असिमद्भ्य** – इति ॥

नमोसिमद्भ्यः खड्गादि शस्त्रवद्भ्यो यथेच्छया ॥ १७

**नक्तम् चरद्भ्य** – इति ॥

नक्तं चरेभ्यो रौद्रोभ्यो गणेभ्योऽस्तु नमो नमः ॥ १८

**प्रकृन्तानां पतये** – इति ॥

प्रकृन्ता निशिसंहत्य प्राणिनो धन हारिणः ।
तेषां च पतये भर्त्रे यदि भक्ता भवन्ति ते ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः ।**

**उष्णीषिण** – इति ।

शिरोवेष्टनमुष्णीषं तद्वते ते नमो नमः ॥ २०

**गिरिचराय** – इति ॥

गिरिः श्रीपर्वतस्तस्य चराय चरते नमः ॥ २१

**कुलुञ्चानां पतये** – इति ॥

कुलुञ्चाः पृथिवी चोराः स्वभक्ता ये कदाचन ।
तेषां च पतये भर्त्रे महारौद्र नमोऽस्तु ते ॥ २२

कुगृहक्षेत्ररज्वाक्षान् (भूमिं च) लुञ्चत्यपहरन्ति ये ।
ते कुलुञ्चाः पतिस्तेषां पालकस्त्वं यतो हर ॥ २३

**नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः ।**

**इषुमद्भ्यो** – इति ॥

इषुमद्भ्य इषून् हस्ते बिभ्रद्भ्योपि नमोऽस्तुते ॥ २४

**धन्वाविभ्य** – इति ॥

धन्वाविभ्यो धनुष्मद्भ्यो वो युष्मभ्यं नमो नमः ।
स्वधनूष्याततज्यानि कुर्वन्तः प्रमथोत्तमाः ॥ २५

**नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः ।**

**आतन्वानेभ्य** – इति ।

आतन्वान इति ज्ञेयास्तद्दशेभ्यो नमो नमः ।

CC-0. T. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**प्रतिदधानेभ्य** – इति।

नमः प्रतिदधानेभ्यो शरान्योज्ञान्यथायथम् ।
निरीक्ष्य संदधानेभ्यो गणेभ्यो वो नमो नमः ॥ २७

**नम आयच्छद्भ्ये विसृजद्भ्यश्च वो नमः ।**

**आयच्छद्भ्य** – इति ॥

आयच्छद्भ्यो यथायोग्यं स्वलक्ष्येपतितान् शरान् ।
आकर्षद्भ्यो मन्त्रशक्त्या च प्रमथेभ्यो नमो नमः ॥ २८

**विसृजद्भ्य** – इति ॥

विसृजद्भ्यः समाकृष्टान्तां मुञ्चद्भ्यो नमो नमः । २९

**नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमः ।**

**अस्यद्भ्य** – इति ॥

अस्यद्भ्यो रिपुशस्त्राणि प्रयच्छद्भ्यो नमो नमः ॥ ३०

**विध्यद्भ्य** – इति ॥

विध्यद्भ्योऽरिशरीराणि ताडयद्भ्यो नमो नमः ॥ ३१

**नमः आसीनेभ्यः शयानेभ्यश्च वो नमः ।**
**नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः ।**
**नमस्तिष्टद्भ्यो धावद्भ्यश्च वो नमः ।**

आसीनेभ्यश्शयानेभ्यो स्वपद्भ्यो वो नमो नमः।
जाग्रद्भ्यो जागरीकेभ्यस्तिष्ठद्भ्यो वो नमो नमः ॥
धावद्भ्यः शोधयद्भ्यो वः .... .... .... .... ॥ ३२

CC-0. Saraसvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमः सभाभ्यः सभापतिभ्यश्च वो नमः।**

**सभाभ्यः** – इति ॥

.... .... .... सभाभ्यो वो नमो नमः ।

**सभापतिभ्यः** – इति ॥

सभापतिभ्यः संघानां पतिभ्यो वो नमो नमः ॥ ३३

**नमो अश्वेभ्योऽवपतिभ्यश्च वो नमः।**

**अश्वेभ्य** – इति ॥

अश्वेभ्योश्ववदुत्कृष्टजववद्भ्यो नमो नमः ॥ ३४

**अश्वपतिभ्यः** – इति ॥

अश्वानां पतयस्तेभ्यो नमस्तदुपलक्षणम् ।
गजोष्ट्रादिपतिभ्यो वः प्रमथेभ्यो नमो नमः ॥ ३५

समुच्चयार्थः सर्वत्र चकार इति मन्यताम् ।
ज्ञेयो नमः पदाभ्यासरस्वादरार्थ इति स्फुटम् ॥ ३६

चेतः श्रीमदुमासहायचरणद्वन्द्वं भजानं(त्वं) सदा
विश्वेशादनघाप्रमेयविभवाद्ब्रह्मादिदेवप्रभोः ।
सापर्णान्निरुपाधिसान्द्रकरुणापीयूषपूर्णार्णवात्
भक्ताभीष्टफलाधिकेष्टफलदात्कोन्यो वदान्यः प्रभुः ॥ ३७

तृतीयस्यानुवाकस्य व्याख्यामेवमहोबलः ।
श्रीमद्भास्करवंशीयश्चक्रे शङ्करतुष्टये ॥ ३८

**इति श्रीमदहोबलकृत श्लोकरूप**
**श्रीरुद्रभाष्ये तृतीयोऽनुवाकः ॥**



CC-0T Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ चतुर्थोऽनुवाकः ॥

नमोममोमापतिपादपद्म-
सद्मेनविघ्नोऽखिलपुण्यसद्मा ।
अतो न विघ्नोयवंसद्मसद्म-
पद्मेकसद्माधमसद्मसद्मा ॥ १

**नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः ।**

**अव्याधिनीभ्यः** – इति ॥

आसमन्तादिक्षु योद्धुं शक्तास्सेनाश्शिवस्य याः ।
तास्त्वा व्याधिन्य इत्येव मन्ये ताभ्यो नमोऽस्तुनः ॥ २

**विविध्यन्तीभ्यः** – इति ॥

विशेषेणैव याश्शत्रून् वेद्धुं शक्ता भवन्ति ताः ।
विविध्यन्त्यश्शिवस्यैताः सेनास्ताभ्यो नमो नमः ॥ ३

**नम उगणाभ्यस्तृँहतीभ्यश्च वो नमः ।**

**उगणाभ्यः** – इति ॥

उत्कृष्टगुणरूपाय उगणाः सप्तमातृकाः । ४

**तृँहतीभ्यः** – इति ॥

हिम्साप्रदा निर्दया या तास्तृंहस्य इति स्मृताः ॥ ५

**नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ।**

**गृत्सेभ्यः** – इति ॥

बुद्धिभेदाश्रया गृत्सास्तादृशेभ्यो नमो नमः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**गृत्सपतिभ्यः** – इति ॥

गृत्सानां पतये श्रेष्ठास्ताहशेभ्यो नमो नमः॥ ६

**नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः।**

**व्रातेभ्यः** – इति ॥

व्राता विविधजातीयाः स्वस्वाभीप्सितवृत्तयः ।

**व्रातपतिभ्यः** – इति ॥

तेभ्यो नमोऽस्तु व्रातानां पतयः परिपालकाः ॥ ७

**नमो गणेभ्यो गणपतिभ्यश्च वो नमः।**

**गणेभ्यः** – इति ॥

गणा देवादिदेवस्य महादेवस्य सेवकाः ॥ ८

**गणपतिभ्यः** – इति ॥

गणानां पतये नन्दिषडाननगजाननाः ॥ ९

**नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः।**

**विरूपेभ्यः** – इति ॥

नग्नमुण्डादिरूपा ये ते विरूपा इति स्मृताः ।
यद्वा विविधरूपा ये ते विरूपा इति स्मृताः ॥ १०

**विश्वरूपेभ्यः** – इति ॥

स्वेच्छास्वीकृतमत्तेभसिंह्मशार्दूलविग्रहाः ।
विश्वरूपा गणास्तेभ्यो नन्द्यादिभ्यो नमो नमः॥ ११



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः ।**

**महद्भ्यः** – इति ॥

महद्भ्यो ज्ञानसदृशप्रभवेभ्यो नमो नमः ।
यद्वा महान्तरस्त्वणिमाद्यनन्तैश्वर्यसंयुताः ॥ १२

**क्षुल्लकेभ्यः** – इति ॥

अल्पविज्ञानसदृशप्रभवाः क्षुल्लका मताः ।
अथवात्वल्पविविधचरित्राः क्षुल्लका मताः ॥ १३

**नमो रथिभ्योऽरथेभ्यश्च वो नमः ।**

**रथिभ्योऽरथेभ्यश्च** – इति ॥

रथिनो रथमारूढा अरथा रथवर्जिताः ।

**नमो रथेभ्योरथपतिभ्यश्च वो नमः ।**

**रथेभ्यः** – इति ॥

रथेभ्यो रथरूपेभ्यो मरुद्भ्यो वो नमो नमः ।
मरुन्मयरथश्शम्भुस्तथाचोक्तं च भारते ॥ १४

**महाभारते** – इति ॥

"हयांश्च चतुरो वेदान्सर्वदेवमयं रथम्" । इति ।

**शिवरहस्ये च** –

"वेदाकाराश्वसंयुक्तं देवाकाररथोत्तमम् ।
समारुह्यमहादेवो याति पश्य षडानन ॥" इति । १५

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**भविष्यत्पुराणे च** –

“अर्काब्जनेमिर्वेदाश्वस्त्रयस्त्रिंशन्मरुन्मयः ।

पुरारेः कल्पितो देवैः स रथो ब्रह्मसारथिः ॥” इति । १६

**रथपतिभ्यः** – इति ॥

रथानां पतयस्तेषां रक्षकाः परितः स्थिताः ॥ १७

**नमः सेनाभ्यः सेनानिभ्यश्च वो नमः ।**

**सेनाभ्यः** – इति ॥

सेनाभ्यः सैनिका भूत्वा क्रीडद्भ्यो वो नमो नमः ॥ १८

**सेनानिभ्यः** – इति ॥

सेनानीभ्यः सैनिकानां नेतृभ्यो वो नमो नमः ॥ १९

**नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः ।**

**क्षत्तृभ्यः** – इति ॥

रथशिक्षणरक्षेभ्यः क्षत्रभ्यो वो नमो नमः ॥ २०

**सङ्ग्रहीतृभ्यः** – इति ॥

सारथिस्सङ्ग्रीता स्यात् ... ... ... ।

**नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः ।**

**तक्षभ्यः** – इति ॥

... ... ... ... वर्धकी तक्ष उच्यते ॥ २१

**रथकाराः** – इति ॥

रथनिर्माणचतुरा रथकारा इति स्मृताः ॥

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमः कुलालेभ्य कमरिभ्यश्च वो नमः ।**

**कुलालेभ्यः** – इति ॥

कुलाला घटनिर्माणचतुरा इति निश्चितः ॥ २२

**कर्मारेभ्यः** – इति ॥

कर्मारा लोहकारा हि .... .... .... ।

**नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमः ।**

**पुञ्जिष्टेभ्यः** – इति ॥

.... .... .... पुञ्जिष्ठाः पक्षिबन्धकाः ।

**निषादेभ्यः** – इति ॥

निषादोमत्स्यहन्ता स्यात् .... ......... ।

**नमइषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः ।**

**इषुकृद्भ्यः** – इति ॥

.... .... .... इषुकृद्बाणकृन्मतः ॥ २३

**धन्वकृद्भ्यः** – इति ॥

धनुकृच्चापकृत्प्रोक्तो .... .... .... ।

**नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः ।**

**मृगयुभ्यः** – इति ॥

.... ......... मृगयुर्मृगहा स्मृतः ।

**श्वनिभ्यः** – इति ॥

श्वनिभ्यश्च शुनां युद्धे नेतृभ्यो वो नमो नमः । २४

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

क्षेत्रप्रभृतयस्सर्वे गणाः श्रीमन्महेशितुः ।
रथादिसृष्टिकरणे समर्था इति मन्यताम् ॥ २५

तथा च तेभ्यसस्सर्वेभ्यो नम इत्यर्थनिर्णयः ।
कृतश्शिवरहस्याख्य पुराण परिशीलनात् ॥ २६

**शिवरहस्ये** :-

"सर्वादौ श्रीमहेशस्य गणास्सर्वे विचक्षणाः ।
रथादिकं कार्यजातं दर्शयन्ति यथा यथम् ॥ २७

एवं रथादिकार्याणि कर्तव्यानीति शिक्षकाः ।
सर्गाद्युत्पन्नकालानां कृपया सानुमोदत" ॥ इति । २८

**नम श्वभ्यः श्वपतिभ्यश्च वो नमः ।**

**श्वभ्यश्च श्वपतिभ्यश्च** - इति ॥

श्वभ्यश्चश्वपतिभ्यश्च युष्मद्भ्यश्च नमो नमः ।
श्वभ्योऽपि प्रणतिर्युक्ता शिवाधिष्ठानशङ्कया ॥ २९

अथवा प्रणतिर्युक्ता वक्ष्यमाणानुरोधतः ।
श्वानो देवाश्च पतयो देवानां परिकल्पिताः ॥ ३०

अयमार्थो विनिर्णातः श्रीमच्छिवरहस्यतः ।
तथाच वैपरीत्येनात्रेष्ठोर्थ विनिर्णयः ॥ ३१

**शिवरहस्ये** -

मल्लाख्ये रिपुसम्हारं कर्तु भैरवरूपधृक् ।
ययौ सबाणतूणीरखड्गाचर्मधरो हरः ॥ ३२

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तदा किरातवेषेण देवास्सर्वेतमन्वयुः ।
तदा देवश्श्वरूपेण ययुर्देवा गुणान्विताः ॥ ३३

दिशः सम्पूरयन्तस्थुर्ध्वनिभिर्मल्लभीषकाः ।
ततो ममार तं मल्लं हरो भैरववेषधृत् ॥ ३४

तदा प्रभृति रुद्रोऽयं मल्लारि रिति कीर्तितः ।
एवं शिवरहस्यस्थतया खल्ववनाशुनाम् ॥ ३५

युक्ता देवस्य रूपाणां गणस्सम्बन्धिनां नमः ।
तथा च श्वपतिभ्यश्च देवेयोयुञ्जतां नमः ॥
अतः शुनां नमस्कारः केत्याक्षेपः पराकृतः ॥ ३६

यत्पादाम्बुजपूजया हरिरभूदर्च्यो यदङ्घ्रयर्चना-
दर्च्याभूत्कमलाविधिप्रभृतयोप्यर्च्यायदङ्घ्रयर्चनात् ।
तं कामान्तकमन्तकान्ततमुमाकान्तं मुदा सन्ततम्
सञ्चिन्त्यंभगवन्तमन्त्यरहितं चेतश्चिरं चिन्तय ॥ ३७

मुकुन्दमौलिमन्दार मकरन्दैकमन्दिरम्
वन्देवन्दारुमन्दारमिन्दुशेखरपादपम् ।
अहोबलेन विश्वेशनामामृतपिपासुना
चतुर्थोप्यनुवाकश्च व्याख्यातश्शुद्धबुद्धिना ॥ ३८

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये**
**चतुर्थोऽनुवाकः ॥**



CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ पञ्चमोऽनुवाकः ॥

### नमो भवाय च रुद्राय नमः ।

**भवाय** – इति ॥

नमो भवाय सर्वत्र सर्वदा भवतीति वा ।
अथवा सर्वमस्मात् भवतीति भवः स्मृतः ॥ १

अथवा वेदविदितं ब्रह्माण्डं सर्वमव्ययम् ।
भवतीति भवस्तस्मै भवाय भवते नमः ॥ २

**रुद्राय** – इति ॥

व्याख्यातमेव प्रथमं मया रुद्रपदं खलु ।

### नमः शर्वाय च पशुपतये नमः ।

**शर्वाय** – इति ॥

श्रृणोति प्रलये सर्वं कार्यजातं हिनस्ति तत् ॥ ३

शर्वोथवा श्रृणत्येनो हिनस्तीति तथा स्मृतः ।

**पशुपतये** – इति ॥

ब्रह्माद्याः पशवस्तेषां पतिः पशुपतिः स्मृतः ॥ ४

### नमो नीलग्रीवाय च शितिकण्ठाय नमः ॥

**नीलग्रीवः** – इति ॥

नीलग्रीवो नीलकण्ठ कण्ठभागपतिः स्मृतः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**शितिकण्ठः** – इति ॥

शितिकण्ठः शुभ्रकण्ठः . . . . . . . . . . . . . . . . ।

**नमः कपर्दिने च व्युप्तकेशाय च ।**

**नमः सहस्राक्षाय च शतधन्वने च ।**

**नमो गिरिशाय च शिपिविष्ठाय च ।**

**कपर्दिन** : – इति ॥

. . . . . . . . . . . . . . . . . . . कपर्दी स जटा सटः ॥ ५

**व्युप्तकेशः** – इति ॥

व्युप्तकेशो लुप्तकेशः .... .... .... .... ।

**सहस्राक्ष** : – इति ॥

.... .... .... .... .... सहस्राक्षः सहस्रदृक् ॥ ६

**शतधन्वन** – इति ॥

शतधन्वाऽनन्तधन्वा .... .... .... .... ।

**गिरिशाय** : – इति ॥

.... .... .... .... गिरिशो गिरिसंश्रयः ।

अन्तर्यामि स्वरूपेण प्रविष्टः प्राणिषु प्रभुः ॥

**शिपिविष्टाय** – इति ॥

शिपिविष्टस्सेत्कृतमो ... ... ... ... ... ॥

**नमो मीढुष्टमाय चेषुमंते च ।**

**नमो ह्रस्वाय च वामनाय च ।**

**नमो बृहते च वर्षीयसे च ।**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**मीढुष्टम** – इति ॥

शिपिविष्टरसेत्कृतमो मीढुष्टम इति स्मृतः ।
अथवा मेघरूपेण सर्वत्राप्यभिवर्षकः ॥ ८

**इषुमान्** – इति ॥

मीढुष्टमो बाणपाणिरिषुमानिति कीर्तितः ।

**ह्रस्वत्वं** – इति ॥

अल्पप्रमाणवत्त्वं तु षा(का)ये ह्रस्वत्वमुच्यते ॥ ९

**वामनत्वं** – इति ॥

कायावयवसंकोचात् वामनत्वं मनोर्मतम् ।

**बृहतः** – इति ॥

बृहतोरुचिराकृत्या प्रौढास्फुरद्वोजसे ॥ १0

अनेन महतोप्यर्थो महीयानिति सूचितः ।

**वर्षीयसः** – इति ॥

गुणैस्समृद्धो वर्षीयान् .... .... .... .... .... ।

**नमो वृद्धाय च संवृध्वने च ।**
**नमो अग्रियाय च प्रथमाये च ।**
**नम आशवे चाजिरय च ।**
**नमः शीघ्रियाय च शीभ्याय च ।**

**वृद्धाय** – इति ॥

... ... ... ... .... वृद्धस्तुवयसाधिकः ॥ ११



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**सम्वृध्वन** – इति ॥

श्रुतिभिर्वृद्धितः सम्यक् संवृद्ध इति गीयते ।
भक्तरससम्वर्धकत्वाद्धा संवृद्ध इति मन्यताम् ॥ १२

**अग्रियाय** – इति ॥

सृष्टिप्राक्तनकालेऽपि वर्तमानोऽग्रियस्स्मृतः ।

**प्रथमाय** – इति ॥

प्रथमाय प्रधानाय सर्व श्रेष्ठाय ते नमः ॥ १३

**आशवे** – इति ॥

आशवे शीघ्रवेगाय त्वरितव्यापिने नमः ।

**अजिराय** – इति ॥

अजिराय नमस्तेऽस्तु गमने कुशलोऽजिरः ॥ १४

**शीघ्रियाय** – इति ॥

शीघ्रियाय नमश्शीघ्रं वहदम्बुवाय च ।
अथवा शीघ्रगामी य स शीघ्रिय इति स्मृतः ॥ १६

**शीभ्याय** – इति ॥

शीभ्याय च नमश्शीभ्यं वहदम्बुभवाय ते ।
शीघ्रावन्तरभेदस्तु शीभ इत्यवगम्यताम् ॥ १७

**नमः ऊर्म्याय चावस्वन्याय च ।**
**नमः स्रोतस्याय च द्वीप्याय च ।**

**ऊर्म्याय** – इति ॥

ऊर्म्यायोर्मिषुवीचीषु भवाय भवते नमः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**अवस्वन्याय** – इति ॥

अवस्वन्याय निश्शब्दस्थिरस्तीरस्थिताय च ॥ १८

अथवाऽवस्वनं नाम स्तिमितस्वनमुच्यते ।
अतस्तत्र भवश्शम्भुरवस्वन्य इति स्मृतः ॥ १९

**स्रोतस्याय** – इति ॥

स्त्रोतस्याय नमस्त्रोतं प्रवाहस्तत्र संस्थितः ।

**द्वीप्याय** – इति ॥

स्त्रोतस्यो(यो)र्मध्यभूर्द्वीपस्तत्रस्थो द्वीप उच्यते ॥ २०

यश्चद्वयप्रवाहोच्चभूर्वा द्वीप इति स्मृतः ।
व्यापकत्वं महेशस्य सर्वत्रैवं स्थितिः स्मृताः ॥ २१

शंभुं प्रभावावधि भावयामो
भवं भवानीसहितं भजामः ।
स्मारारिमेवानुदिनंस्मरामो
वाराणसीनाथ किमाचरामः ॥ २२

व्याख्यातः पञ्चमोप्येवममुवाकोघशोषकः ।
अहोबलेन विश्वेश पदाब्जरसलिप्सुना ॥ २३

सद्भस्मनाङ्गानि विलेपयामो
रुद्राक्षरत्नैश्च विभूषयामः ।
पञ्चाक्षरं पापहरं जपामो
वाराणसीवासमुखं स्तवामः ॥ २४

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये पञ्चमोनुवाकः ॥**



CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ षष्ठोऽनुवाकः ॥

**नमो ज्येष्ठाय च कनिष्ठाय च ।**
**नमः पूर्वजाय चापरजाय च ।**
**नमो मध्यमाय चापकल्भाय च ।**

**ज्येष्ठाय** – इति ॥

नमो ज्येष्ठाय विद्याद्यैरत्युत्कृष्टाय ते नमः ।
अथवा ज्येष्ठशब्दोऽत्र प्रशस्थतम वाचकः ॥ १

**कनिष्ठाय** – इति ॥

नित्ययूने कनिष्ठाय यद्धा विज्ञेयमूर्तये ।
अणोरणीय इति वा कनिष्ठार्थोवगम्यताम् ॥ २

**पूर्वजाय** – इति ॥

पूर्वजः पूर्वकालेऽपि सर्गात्प्रगपि संस्थितः ।

**अपरजाय** – इति ॥

प्रलयान्ते विद्यमानोऽपरजत्वेन कीर्तितः ॥ ३

**मध्यमाय** – इति ॥

मध्यमो मध्यकालेऽपि व्यिमान इति स्मृतः ।

**अपगल्भाय** – इति ॥

अप्ररूढेन्द्रियग्रामस्त्वप्रगल्भ इति स्मृतः ।

**अपगल्भाय** – इति ॥

अप्ररूढेन्द्रियग्रामस्त्वप्रगल्भ इति स्मृतः ॥ ४

**नमो जघन्याय च बुध्नियाय च ।**
**नमः सोभ्याय च प्रतिसर्याय च ।**
**नमो याम्यायच च क्षेम्याय च ।**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**जघन्याय** – इति ॥

पश्चाद्भागस्तु जघनं ततस्तत्रापि संस्थितः ।
जघन्य इति विज्ञेयो बुध्नियो मूलसंश्रयः ॥ ५

**बुध्नियाय** – इति ॥

बुध्नं तु मूलं बिल्वादेः तत्रस्थो बुध्नियस्स्मृतः ।

**सोभ्याय** – इति ॥

सोभा गन्धर्व नगरी तत्रस्थः सोभ्य उच्यते ॥ ६
उभाभ्यां पुण्यपापाभ्यां सह वर्तत इत्यपि ।
सोभ्योनृलोकस्तत्रस्थो सोभ्य इत्यभिमन्महे ॥ ७

**प्रतिसर्याय** – इति ॥

रक्षाबन्ध प्रतिसरः प्रतिसर्पस्तु तद्गतः ।

**याम्याय** – इति ॥

प्राणसम्यमनस्थाय याम्याय च नमो नमः ॥ ८

**क्षेम्याय** – इति ॥

क्षेमो गुप्तिस्थलं तत्र संस्थः क्षेम्य उदीरितः ।

**नम उर्वर्याय च खल्याय च ।**
**नमः श्लोक्याय चावसान्याय च ।**
**नमो वन्याय च कक्ष्याय च ।**

**उर्वर्याय** – इति ॥

उर्वरा सर्वसस्याढ्याहयुर्वर्यास्तत्रसंस्थितः ॥ ९

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**खल्याय** – इति ॥

खलो नूतनशाल्यादिप्रविवेचनभूः स्मृतः ।
तद्भूमौ वर्तमानत्वात् ईशः खल्य इति स्मृतः ॥ १०

**श्लोक्याय** – इति ॥

श्लोके मन्त्रभवः श्लोक्यः प्रतिपाद्यतयाथवा ।
श्लोकप्रसिद्धस्तत्रऽपि स्थितः श्लोक्य इति स्मृतः ॥ ११

**अवसान्याय** – इति ॥

वेदावसानं वेदान्तस्तत्र तिष्ठति शङ्करः ।
प्रतिपाद्यतया तस्मादवसान्य इति स्मृतः ॥ १२

**वन्याय** – इति ॥

वने बिल्वादिरूपेण स्थितो वन्य इति स्मृतः ।

**कक्ष्याय** – इति ॥

कक्ष्याय कक्षे गुल्मादौ विद्यामानाय ते नमः ॥ १३

**नमः श्रवाय च प्रतिश्रवाय च ।**
**नमः आशुषेणाय चाऽऽशुरथाय च ।**
**नमः शूराय चावभिन्दते च ।**

**श्रवाय** – इति ॥

नम श्रवाय वेदेषु श्रूयमाणाय ते नमः ।
यद्वा श्रूयत इत्येव श्रवशब्दः शिवाभिधः ॥ १४

**प्रतिश्रवः** – इति ॥

तत्र श्रवस्तदाकरः प्रतिशब्दः प्रतिश्रयः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**आशुषेणाय** – इति ॥

अशुषेणयाशुशीघ्रव्यापि सेनाय ते नमः ॥ १५

**आशुरथाय** – इति ॥

शीघ्रगामी रथो यस्य स स्यादाशुरथस्स्मृतः ।

**शूराय** – इति ॥

शूराय युद्धकालेषु महाधैर्यवते नमः ॥ १६

**अवभिन्दत** – इति ॥

स्वभक्तद्विट्शिरोभेत्रे नमस्तेस्त्वभिद्यते ।

**नमो वर्मिणे च वरूथिने च ।**
**नमो बिल्मिने च कवचिने च ।**
**नम श्रुताय च श्रुतसेनाय च ।**

**वर्मिणे** – इति ॥

वर्म कञ्चुक संवीतो .... .... .... ।

**वरूथिन** – इति ॥

.... .... .... वरूथी वरगुप्तवान् ।
वरूथं सूतसंगुप्तस्थलमित्यवगम्यताम् ।
यद्वा वरूथिसन्नद्धविशिष्ठप्रग्रहः स्मृतः ॥ १८

लोकधारण सूत्राणि प्रग्रहा इति कीर्तिताः ।

**बिल्मिन** – इति ॥

बिल्मिने छिद्रसंवीत शिरस्त्राणवते नमः ॥ १९

**कवचिन** – इति ॥

अङ्गरक्षाकरं वस्तु कवचं परिकीर्तितम् ।

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तद्यस्यासौ हि कवचं तस्मै कवचिने नमः ॥ २०

**श्रुताय** – इति ॥

श्रुताय श्रुतिसिद्धाय .... .... .... ।

**श्रुतसेनाय** – इति ॥

.... .... .... .... ख्यातसेनाय ते नमः ।
यद्वा श्रुत्यैकसंवेद्यसेनायेत्यवमन्महे ॥ २१

नित्यानन्दवते तपोधनमनो भृङ्गावली संवृता-
स्तत्वप्रत्ययदिव्यगन्धविलसद्धेरण्यपुष्पावृतः ।
धर्मार्थादिफलप्रदो भगवतो वल्ली समालिङ्गितो
विश्वेशाख्यसुरद्रुमो विजयते चेतस्तमेवाश्रय ॥ २२

एवं षष्ठानुवाकोऽपि व्याख्यातः पापपावकः ।
अहोबलेन विश्वेशपादपङ्कजमौलिना ॥ २३

**॥ ध्यानम् ॥**

भज मामकमन्तकान्तकं
गिरिजाकामुकमन्धकान्तकम् ।
मदनान्तकमन्तमाविपाकं
विधुखण्डाङ्कमन्तगमम्बिकाङ्गम् ॥ २४

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये षष्ठोनुवाकः ॥**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ सप्तमोऽनुवाकः ॥

**नमो दुन्दुभ्याय चाऽऽहनन्याय च ।**
**नमो धृष्णवे च प्रमृशाय च ।**
**नमो दूताय च प्रहिताय च ।**

**दुन्दुभ्याय** – इति ॥

दुन्दुभ्यां वर्तमानाय दुन्दुभ्याय नमो नमः ।
दुन्दुभ्यां जनितश्शब्दो दुन्दुभ्य इति मन्यताम् ॥ १

तथा च दुन्दुभ्योत्पन्ने शब्दे श्राव्येतरे सह ।
विद्यमानो महादेवो दुन्दुभ्य इति कीर्तितः ॥ २

**आहन्याय** – इति ॥

आहन्याय यो दण्डो दुन्दुभ्य हननार्थकः ।
तद्दण्डे वर्तमानोऽयं आहनन्य इति स्मृतः ॥ ३

**धृष्णव** – इति ॥

धृष्णवे स्वत्मविमुख धर्षणाय च ते नमः ।

**प्रमृशाय** – इति ॥

प्रमृश्याय परामर्श कुशलाय नमोस्तुते ॥ ४

**दूताय** – इति ॥

दूताय दूतदेहादौ वर्तमानाय ते नमः ।
यद्वा दूतो नन्दिकेशस्तद्रूपायेति मन्यताम् ॥ ५



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यद्धा दूतो वह्निरेवदयया सुरकारिकृत् ।
ततस्तदात्मकत्वेनदूतत्वं परिभाषितम् ॥ ६

वस्तुतोदूतशब्दस्तु पवित्रः कर्मवाचकः ।
श्रुतिभाष्ये तथा व्याख्ये बिभ्रतः पूर्वमेव हि ॥ ७

**प्रहिताय** – इति ॥

प्रकर्षेण स्वभक्तानां हितकृत्प्रहितः स्मृतः ।

**नमो निषङ्गिणे चेषुधिमते च ।**
**नमस्तीक्ष्णेषवे चाऽऽयुधिने च ।**
**नमः स्वायुधाय च सुधन्वने च ।**

**निषङ्गिणे चेषुधिमतेति** –

नामद्धयन्तु व्याख्यातमुत्तरं पूर्वमेव हि ॥ ८

**तीक्ष्णेषव** – इति ॥

तीक्ष्णेषवे क्रूरधारा शराय च नमो नमः ।

**आयुधिने** – इति ॥

प्रशस्तविविधानान्तायुधायायुधिने नमः ॥ ९

**स्वायुधाय** – इति ॥

शोभाकरायुधंशूलं तद्धते स्वायुधाय च ।

**सुधन्वने** – इति ॥

सुधन्वने शोभनोच्च धनुर्दण्डाय ते नमः ॥ १०

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमः स्रुत्याय च पथ्याय च ।**

**नमः काट्याय च नीप्याय च ।**

**नमः सूद्याय च सरस्याय च ।**

**स्रुत्याय** – इति ॥

स्रुतिः सूक्ष्मतरो मार्गः स्रुत्यस्तन्मार्ग संश्रयः ।

**पथ्याय** – इति ॥

पथ्यास्थूलतरोमार्गपर्य(थ)स्तन्मार्गसंश्रितः ॥ ११

**काट्याय** – इति ॥

काटसन्निहितः काट्यः काटं शङ्गरसश्रयम् ।

काश्मीर रसबाणादि शिवलिङ्गमितिस्मृतम् ॥ १२

**निप्याय** – इति ॥

नीप्याय न्यगतादेशे यस्मान्नापः शिलोच्चयात् ।

स नीपस्तत्प्रदेशस्थो नीप्य इत्याभिधीयते ॥ १३

**सूद्याय** – इति ॥

सूदः कर्दमभूत्सूद्यः तत्रसन्निहितोऽथवा ।

शोभनोदक देशस्तः सूद्य इत्यवगम्यताम् ॥ १४

**सरस्याय** – इति ॥

सरस्यस्तु सरो भूमौ विद्यामानः सरस्फुटम् ।

यद्वा सखदोदात्मा यद्वा तज्जल संस्थितः ॥ १५

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमो नाद्याय च वैशन्ताय च ।**
**नमः कूप्याय चावट्याय च ।**
**नमो वर्ष्याय चावर्ष्याय च ।**

**नाद्याय** – इति ।

नावोनद्यां भवोयद्धा नदिपानीयसंश्रितः ।
यद्धा नदीनीररूपो नाद्य इत्यभिधीयते ॥ १६

**वैशन्ताय** – इति ॥

वेशन्तो देवखातः स्याद्वैशन्तस्तत्र संस्थितः ।
वेशान्तोल्प सरस्तत्र स्थितो वैशन्त उच्यते ॥ १७

**कूप्याय** – इति ॥

कूप्यः कूपस्थितो यद्धा कूपस्तज्जलसंश्रयः ।

**अवट्याय** – इति ॥

अवट्यायावटेगर्ते संस्थिताय च ते नमः ॥ १८

**वर्ष्याय** – इति ॥

वर्ष्याय वर्षपानीयविद्यमानाय ते नमः ।

**अवर्ष्याय** – इति ॥

अवर्षे सिन्धुपयसि स्थितोऽवर्ष इति स्मृतः ॥ १९

**नमो मेघ्याय च विद्युत्याय च ।**
**नमः ईध्रियाय चाऽऽतप्याय च ।**
**नमो वात्याय च रेष्मियाय च ।**
**नमो वास्तव्याय च वास्तुपाय च ।**

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**मेध्याय** – इति ॥

मेध्याय मेघसंस्थाय .... .... .... ।

**विद्युत्याय** – इति ॥

.... .... .... विद्युत्यो विद्युतिः स्मृतः ।

**ईध्रिय** – इति ॥

ईध्रं शारदमभ्रं स्यात् ईध्रियस्तत्र संस्थितः ॥ २०

यद्वेध्रमग्नितप्ताम्बु तत्रस्थस्त्वीध्रियः स्मृतः ।

**आतप्याय** – इति ॥

आतपे वर्तमानत्वात् आतप्य अभिधीयते ॥ २१

**वात्याय** – इति ॥

वात्यो वातेभवो यद्वा प्राणवायुसमन्वितः ।

**रेष्मियाय** – इति ॥

रेष्मियोरिष्यन्ति नश्यन्ति भूतान्यत्रेति योगतः॥ २२

रेष्मः प्रलयकालातो रेष्म्यस्तत्काल संस्थितः ।

यद्वा युगान्तकालीनः सम्वर्ताख्यो महानिलः ॥

रेष्म्यस्तत्रभवोरेस्म्यो यतस्तत्रापि वर्तते ॥ २३

**वास्तव्याय** – इति ॥

वास्तव्याय वसुद्रव्यं वास्तव्यस्तत्र संस्थितः ।

यद्वा वायु समुत्पन्नः पांसुवर्ती तथा स्मृतः ॥ २४

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**वास्तुपाय** – इति ॥

गृहनिर्माण भूवास्तु तत्रत्यो वास्तुपः स्मृतः ।
वास्तव्यो वस्तुविभवो यद्वा वस्त्वधिपः स्मृतः ॥ २५

**॥ ध्यानम् ॥**

याचेहं भवभारभीरुरधुनात्वय्येव भक्तिं विभो
पुण्यामव्यभिचारिणीमतिदृढः प्रणप्रयाणावधि ।
सा भक्तिर्भव भीमभारहरणे दक्षैव दक्षान्तक-
त्रयक्षाक्षीणगुणप्रभाव भगवन् श्रीमद्भवानीपते ॥ २६

व्याख्वातः सप्तमोप्येवमनुवाको यथोचितम् ।
अहोबलेन विश्वेशपादपद्मावलम्बिना ॥ २७

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये**
**सप्तमोऽनुवाकः ॥**



CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ अष्ठमोऽनुवाकः ॥

**नमः सोमाय च रुद्राय च ।**
**नमस्ताम्राय चारुणाय च ।**
**नमः शङ्गाय च पशुपतये च ।**

**सोमाय** – इति ॥

नमः सोमाय सोम स्तु साम्बोंवा पार्वतीखलु ।
एवं शिवरहस्येऽपि सोमशब्दो निरुपितः ॥ १

उमया सहितस्सोमस्ततः स गिरिजापतिः ।
अतः पूजय तं सोममित्युक्तं गौतमेन हि ॥ २

**रुद्राय** – इति ॥

व्याख्यात एव बहुधा रुद्रशब्दः पुरा मया ।

**ताम्रायारुणाय** – इति ॥

प्राक्ताम्रारुणशब्दौ च व्याख्यातौ तत्वतो मया ॥ ३

**शङ्गाय** – इति ॥

शं सुखं गमयित्रेते शंगाय च नमोनमः ।

**पशुपतये** – इति ॥

ब्रह्माद्याः पशवस्तेषां पतिः पशुपतिः स्मृतः ॥ ४

**नम उग्राय च भीमाय च ।**
**नमो अग्रेवधाय च दूरेवधाय च ।**
**नमो हन्त्रे च हनीयसे च ।**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**उग्राय** – इति ॥

रोगाद्यनहि(भि) भूतत्वादुग्र इत्युच्यतेऽथया ।
अभक्तनाशनोद्भूतक्रोधवानुग्र उच्यते ॥ ५

**भीम** – इति ॥

भीमो भयङ्करो यद्वा स्वभक्तारिभयप्रदः ।

**अग्रेवधाय** – इति ॥

अग्रेवधोग्रपुरतः स्थित्वा भक्तजिघांसवः ॥ ६

एतेषां घातुको हन्ता योसावग्रोवधः स्मृतः ।

**दूरेवधाय** – इति ॥

दूरेवधो दूरतोप्य स्थित्वा भक्तजिघांसवः ॥ ७

एतेषां धातुकोहन्ता योऽसौ दूरवधः स्मृतः ।

**हन्त्र** – इति ॥

अभक्तं हन्ति यो यत्र तत्र तद्रूपमाश्रितः ॥ ८

सोयमेव हि हन्तातः तस्मै हन्त्रे नमोऽस्तु नः ।
उक्तं शिवरहस्येऽपि षण्मुखं प्रति शम्भुना ॥ ९

"प्रणतं शिवपादाब्जे विनयानतकन्धरम् ।
निमित्रमात्रमेवाद्य भव षण्मुख वस्तुतः ॥ १०

तारकासुरहन्तेति तव कीर्तिर्भविष्यति ।
लभस्व विजयं पुत्र माकुरुष्वात्रसंशयम्" ॥ इति ॥ ११

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

संहारकालेतिशयेन हन्ता
योऽसौ हनीयानिति कीर्तितो नः ।
हनीयसे सञ्जितसर्वलोक-
विनाशकर्त्रे महते नमोऽस्तु ॥ १२

**नमो वृक्षेभ्यो हरिकेशेभ्य च ।**
**नमस्तारय नमशाम्भवे च मयोभवे च ।**
**नमः शङ्कराय च मयस्कराय च ।**

**वृक्षेभ्यो हरिकेशेभ्यः** – इति ॥

हरिद्वर्णानि केशानि पर्णानि त्रिदलानि तु ।
येषां ते हरिकेशास्तु बिल्ववृक्षाः शिवात्मकाः ॥ १३

बिल्ववृक्षस्वरूपेभ्यः रुद्रेभ्यो नम इत्ययम् ।
अर्थाः शिवरहस्यस्थाः कथमत्रानु वर्णिताः ॥ १४

**शिवरहस्ये** – इति ॥

हरिकेशो महानेषः कोमलामलपल्लवः ।
तत्पत्रैस्त्रिदलैः शुद्धैः हरिकेशं समर्चय ॥ १५

हरिकेशार्चं भक्त्या हरिकेशं दलैर्नवैः ।
यः करोति स यात्येव हरिकेशं महेश्वरम् ॥ १६

**ताराय** – इति ॥

तारयत्यघसंसारादितितारः प्रकीर्तितः ।
प्रणवप्रतिपाद्यत्वात् तार इत्यपि मन्महे ॥

यद्वाप्रणवरूपत्वात्तारो विश्वेश्वरस्स्मृतः ॥ १७



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**शम्भवेच मयोभव** – इति ॥

सुखैकरूपं प्रवदामि शम्भुं
यद्धा सुखं भावयतीति **शम्भुः** ।
मयः सुखं तं प्रकृतिर्मयो भूः
यद्धामयोभूरसुखदुःखरूपा ॥ १८

**शङ्कराय** – इति ॥

शङ्कराय स्वभक्तानां शङ्करोतीति शङ्करः ।

**मयस्कराय** – इति ॥

मयस्कराय भक्तानां सुखभेदकराय च ॥ १९

**नमः शिवाय च शिवतराय च ।**
**नमस्तीर्थ्याय च कूल्याय च ।**
**नमः पार्याय चावार्याय च ।**

**शिवाय** – इति ॥

शिवो निष्कल्मषो यद्धा सच्चिदानन्दलक्षणः ।
यद्धा निध्धर्मिको यद्धा कल्याणात्मेति मन्महे ॥ २०

वस्तुतश्शिवशब्दार्थो ब्रह्माद्यैरपि तत्वतः ।
नैवभूता तदर्थोऽत मयं(या) ज्ञातुं न शक्यते ॥ २१

परन्तु शिवशब्दार्थंशिवास्सर्वो नमो नमः ।
ज्ञानादितत्वतो यस्मात्सस्वतस्तत्ववित्तमः ॥ २२

करोत्यतिशयेनैव भक्ताञ्निष्कल्मषत्वतः ।

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**शिवतराय** – इति ॥

शिवश्शिवतरो यद्वा स्वतोत्यन्तमकल्मषः ॥ २३
यद्वातिमङ्गलोत्यन्तं मङ्गलप्रदविग्रहः ।
यद्वातिमङ्गलाकारश्शिवः शिवतरः स्मृतः ॥ २४

**तीर्थ्यायय** – इति ॥

तीर्थतीर्थे विमुक्तादौ सदा सन्निहितो भव ।
तीर्थं काश्याभिधं क्षेत्रं तद्रूपं तीर्थ उच्यते ॥ २५

**कूल्याय** – इति ॥

कूल्याय कूले गङ्गादि नदीकूले भवाय च ।

**पार्याय** – इति ॥

पार्याय पारे दुःखाब्धिपरतीरमुमुक्षुभिः ॥ २६

**वार्याय** – इति ॥

ध्येयत्वेन स्थितोयस्मात्तदवार्य इति स्मृतः ।
यद्वा पारे नदीपारे स्थितः पारे इति सः स्मृतः ॥ २७
अपारस्याद्वयत्तीरं तत्रस्थोप्यार्य उच्यते ।

**नमः प्रतरणाय चोत्तरणाय च ।**
**नम आतार्याय चाऽऽलाद्याय च ।**

**प्रतरणाय** – इति ॥

संसारतरणोपायोहेतुप्रतरणो फलः ॥ २८

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**उत्तरणाय** – इति ॥

पञ्चाक्षरस्वरूपेण पापाब्धितरणक्षमः ।
तत्वज्ञान स्वरूपेण कृत्स्न संसारतारणे ॥ २९

हेतुरुत्तरणो यस्माच्छिव एव तदात्मकः ।
संसार तीरं प्राप्यापि यस्वकर्माविशेषतः ॥ ३०

**आतार्य** – इति ॥

आवर्तनं तदा तारोह्यातार्यस्तत्र संस्थितः ।
भूयो भूयोऽपि संसारसागरे परिवर्तनम् ॥ ३१

आलादो वर्तमानोत्रत्वालाद इति कीर्तितः ।
आलोक प्रेरकत्वेन तत्सम्बन्धी महेश्वरः ॥ ३२

**आलाद्य** – इति ॥

आलाद्य इति वाज्ञेयोह्यालादो जीव उच्यते ।
अलं पूर्णां यथा कामं स्वकर्म परिवर्ति यः ॥ ३३

सोलादोतो जीव एव वस्तुतो लाद उच्यते ।
उक्तं शिवरहस्येऽपि तयो रन्यत्तुपिप्पलम् ॥ ३४

स्वाद्धत्यनश्नन्यस्तु स्वस्वरूपेण तिष्ठति ।
आलादं पश्य पश्यैनं पिशाचतनुसंश्रयम् ॥ ३५

शिवद्रोह परं नष्ठं बहुरोगसमाकुलम् ॥" इति ।

**नमः शष्प्याय च फेन्याय च ।**
**नमः सिकत्याय च प्रवाह्याय च ॥**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**शष्प्याय** – इति ॥

नमश्शष्प्याय शष्प्यन्तु नवदर्भादितद्गतः ॥ ३६

**फेन्याय** – इति ॥

शष्फ्यः फेनोद्भवः फेन्यः .... .... .... ।

**सिकत्यः** – इति ॥

.... .... .... (सिकत्यः) सिकताश्रयः ।

**प्रवाह्याय** – इति ॥

प्रवाहे स्त्रोतसि भवः प्रवाह्य इति मन्यताम् ॥ ३७

किं त्र्यक्ष क्षिपसि क्षयिष्णु विभवात्वष्टामि तृष्णाम्बुधौ
प्रारब्धं मम तादृशं यदि तदा को वा तवानुग्रहः ।
ईशानुग्रह भाजनो यदि जनः प्रारब्ध बन्धस्तदा
शम्भो संसृतिघोरभारविमुखास्त्वामर्चयेयुः कथम् ॥ ३८

अष्ठमोप्यनुवाकोऽयं शिष्ठः कष्टनिवारकः ।
अहोबलेन व्याख्यातः शङ्करासक चेतसा ॥ ३९

हरधीरामराधारमामनाधारमुद्धर ।
अपारासार संसार पारावारा वृतित्वरम् ॥ ४०

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये**
**अष्टमोऽनुवाकः ॥**



CC-0. Saraٙsvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ अथ नवमोऽनुवाकः ॥

**नमः इरिण्याय च प्रपथ्याय च ।**
**नमः किँशिलाय च क्षयणाय च ।**
**नमः कपर्दिने च पुलस्तये च ।**

**इरिण्याय** – इति ॥

ऊषरक्षेत्रमिरणमीरिण्यस्त्विरिणे भवः ।

**प्रपथ्याय** – इति ॥

बहुभिस्सेवितः पन्थाः प्रपथः परिकीर्तितः ॥ १

तत्रापि वर्तमानत्वात् प्रपथ्य इति गीयते ।

**किँशिलय** – इति ॥

किँशिलाः कुत्सिताः क्षुद्राः शिला यत्र स किंशिलः ॥ २

तत्रापि विद्यमानत्वात् किं शिलोयं महेश्वरः ।
अथवा किंशिलातेदंलिङ्गमित्यादि संश्रयः ॥ ३

तत्रासौ किंशिला तत्र संश्रितः किंशिलः स्मृतः ।

**क्षयणाय** – इति ॥

निवासयोग्यो देशोयं स एव क्षयणः स्मृतः ॥ ४

तत्रापि वर्तमानोयं क्षयणः सर्वगो यत ।

**कपर्दिन** – इति ॥

कपर्दिते जटाचूट धारिणे ते नमोऽस्तु नः ॥ ५

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**पुलस्तय** – इति ॥

पुलस्त्वयः कुन्तलास्युस्तद्धते च पुलस्तये ।
पुलस्तिः शिवभक्तानां पुरस्तात्तिष्ठतीति वा ॥ ६

**नमो गोष्ठ्याय च गृह्याय च ।**
**नमस्तल्प्याय च गेह्याय च ।**
**नमः काट्याय च गह्वरेष्ठाय च ।**

**गोष्ठ्याय** – इति ॥

गो निवासस्थलं गोष्ठं गोष्ठ्यास्तत्रभवो भवः ।

**गृह्याय** – इति ॥

गृह्यो महेश्वरगृहे वर्तमान इति स्मृतः ॥ ७

**तल्प्याय** – इति ॥

तल्प्यस्तल्पे भवस्तल्प्यश्शयनीयं मनोहरम् ।

**गेह्याय** – इति ॥

गेह्यो गेहे भवो गेहः प्रासाद इति मन्यताम् ॥ ८

**काट्याय** – इति ॥

काट्यःकाटे भवः काटं महारण्यं दुरासदम् ।
वस्तुतः काटशब्दार्थः शिवलिङ्गं शिवात्मकम् ॥ ९

**शिवरहस्ये** – इति ॥

काटेसन्निहितो नित्यं काटरूपी सदाशिवः ।
काटे समर्चितो भक्त्या स्वेष्टसिद्धिं प्रयच्छति ॥ १०

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

रसकाटे रत्नकाटे शिवकाटेऽथवाशुभे ।
मृत्काटे शर्कराकाटे शिवमर्चय सन्ततम् ।। इति ।। ११

**गह्वरेष्ठाय** – इति ।।
गह्वरेष्ठो गह्वरेस्थो गह्वरं पर्वतादिकम् ।

**नमो ह्रदय्याय च निवेष्प्याय च ।**
**नमः पाँसव्याय च रजस्याय च ।**
**नमः शुष्क्याय च हरित्याय च ।**

**ह्रदय्याय** – इति ।।
ह्रदे भवो ह्रदे यस्य ह्रदोगाधजलस्थलम् ।। १२

**निवेष्प्याय** – इति ।।
निवेष्प्यस्तु निवेष्प्यस्थो निवेष्पं तुहिनोदकम् ।।

**पाँसव्याय** – इति ।।
पांसव्यः पांसुवर्त्तीयः पांसवः परमाणवः ।। १३

**रजस्याय** – इति ।।
रजस्यस्तु रजोवर्त्ती रजस्त्रुत्यणुकादिकम् ।

**शुष्क्याय** – इति ।।
शुष्क्यः शुष्क्ये भवः शुष्क्यं नीरसं द्रव्यमुच्यते ।। १४

**हरित्याय** – इति ।।
आर्द्रं द्रव्यं तु हरितं हरित्यो हरिते भवः ।

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमो लोप्याय चोलप्याय च ।**

**नम ऊर्व्याय च सूर्म्याय च ।**

**नमः पर्ण्याय च पर्णशद्याय च ।**

**लोप्याय** – इति ॥

तृणानि लुप्यते यस्मिन् तल्लोपं कठिनं स्थलम् ॥ १५

तत्रापि वर्तमानोऽयं लोप्य इत्यवगम्यते ।

**लप्याय** – इति ॥

उलपे वर्तते यो सावुलप्य इति मन्महे ॥ १६

उलपा बिल्मजाः प्रोक्तास्तथा वनतृणादयः ।

**ऊर्व्याय** – इति ॥

उर्व्योयोर्व्यां भवोयोर्वी पृथिवीत्यवगम्यताम् ॥ १७

**सूर्म्याय** – इति ॥

शोभना ऊर्मयो यस्यां नद्यां सा सूर्मिरुच्यते ।

तस्यां नद्यां वर्तमान सूर्मिरित्यवगम्यताम् ॥ १८

यद्वा सूर्मिप्रतिकृतिमूर्तिस्तत्र भव स्मृतः ।

**पर्ण्याय** – इति ॥

पर्णेषु बिल्वपत्रेषु भवः पर्ण्य इति स्मृतः ॥ १९

**पर्णशद्याय** – इति ॥

पर्णशद्यं विजानीमो भवं पर्णच्छदे भवम् ।

शुष्कछदनसंघातो यस्सपर्णछदस्मृतः ॥ २०



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**नमोऽपगुरमाणाय चाभिघ्नते च ।**

**नम आक्खिदते च प्रक्खिदते च ।**

**नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यः ।**

**अपगुरमाणाय** - इति ॥

हरोपगुरमाणोयमभक्तेषुद्यतायुधः ।

मन्येऽपगुरमाणं तं अभक्तेषूद्यतायुधम् ॥ २१

**अभिघ्नत** - इति ॥

हन्तव्यानाभिमुख्येन हिंसतेऽभिघ्नते नमः ।

**अक्खिदते** - इति ॥

नम आक्खिदते वैषदुःखदायापराधिषु ॥ २२

**प्रक्खिदते** - इति ॥

नमः प्रक्खिदतेऽत्यन्तं दुःखदाय दुरात्मसु ।

**किरिकेभ्य** - इति ॥

कुर्वन्ति स्वेच्छया लोकान्ये ते तु किरिकाः स्मृताः ॥ २३

धनं किरन्ति भक्तेभ्यः प्रयच्छन्ति तवाऽथवा ॥

**देवानाँहृदयेभ्यः** - इति ॥

तथा च किरिका रुद्रा देवानां हृदयप्रियाः ।

तथाविधेभ्यो देवानां हृदयेभ्यो नमो नमः ॥ २४.

CC-0TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## नमो विक्षीणकेभ्यः ॥

अशांभवानां विविधां हिंसां कुर्वन्ति ये च ते ।
विक्षीणकास्तादृशेभ्यो क्षीणकेभ्यो नमोस्तु नः ॥ २५

विक्षीणका क्षीणभिन्नास्सर्वदा क्षयवर्जिताः ।
सदातिशयितानन्दा दानिलिप्ता इव स्मृताः ॥ २६

## नमो विचिन्वत्केभ्यः ॥

विचिन्वन्तीप्सितार्थान् साधयन्ती नियोगतः ।
विचिन्वत्का महोत्साहा समर्था इति मन्यताम् ॥ २७

अथवानुग्रहं कर्तु भक्तानन्यांश्च शासितुम् ।
विचिन्वते विचिन्वत्का रुद्रास्तेभ्यो नमो नमः ॥ २८

## नम आनिर्हतेभ्यः ॥

आसमन्ताद्विशेषेण घ्नन्ति पापानि ये कृते ।
आनिर्हतास्मारुद्रा घ्नन्ति पापानि संस्मृताः ॥ २९

आसमन्तान्निर्हतेभ्यो हन्तृभ्यः शिवदूषकान् ।
आनिर्हतेभ्यो रुद्रेभ्य इति वा वर्णयामहे ॥ ३०

आसर्वत्रापि मीवन्ति व्याप्नुवन्तीति योगतः ।

## नम आमीवत्केभ्यः ॥

आमीवत्का आसमन्ताज्जृम्भमाणस्सदेति वा ॥ ३१

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यत्पादाग्रनखप्रभाङ्कितसुरव्रातोत्तमाङ्गान्वितम्
स्वर्णालङ्कृतपादपाठमनिशं ब्रह्मादिदेवार्चितम् ।
सेवन्ते मुनयस्तमेव सततं देवादिदेवं भवं
भक्ताभीप्सितवस्तुदाननिपुणं वन्दे मृडं सन्ततम् ॥ ३२

व्याख्याय सम्यक् नवमानुवाक-
महोबलो भास्करवंशजन्मा ।
देवादिदेवाय महेश्वराय
समर्पयामास शिवप्रदाय ॥ ३३

**॥ ध्यानम् ॥**

यत्पादाग्रनखप्रभाव्रतमणीभ्राजत्किरीटोऽभव-
त्तन्निन्द्रोपेन्द्रपुरोगमामरगणास्तंदेव देवोत्तमम् ।
स्वस्वान्ते निवसन्तमन्तरहितं शान्तं मुनीन्द्रं स्तुतम्
वेदान्ताश्रितचित्तचिन्तितमुमाकान्तं भजे सन्ततम् ॥ ३४

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये नवमोऽनुवाकः ॥**

-------✿-------

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ दशमोऽनुवाकः ॥

**द्रापे अन्धसस्पते दरिद्रन्नीललोहितः ।**
**एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो ।**
**मो एषां किञ्चनाऽऽममत् ।**

**द्रापस्तु** वज्रकवचं तद्धा द्रापिस्तथा सति ।
हे रुद्र कवचिन्नीशेत्यत्र सम्बोधनं मतम् ॥ १

अभक्ता द्रापयत्**यन्ध**तमः प्रापयतीति वा ;
द्राविन्नरकदानेन क्लेश इत्यात्मदृष्टगान् ॥ २

अन्धोन्नं तत्**पति**स्वामी भक्तान्न परिपालकात् ।
द[illegible]तकृद्यद्वा **दरिद्रं** निष्परिग्रहः ॥ ३

निलीनं लोहितं पापं यस्यासौ **नीललोहितः** ।
यद्वा नीलगलोन्यत्र लोहितो नीललोहिता ॥ ४

हे रुद्रेश ! मदीयानां **पुरुषाणां** तथैव च ।
**येषां पशूनां** मध्येऽपि कोपि माभेस्तदाज्ञया ॥ ५

**माभेरर्थ**स्तु माभैर्षीः भयं मां माप्नुयादिति ।
वर्णनीयोन्यथा तस्य न तत्राप्यन्वयो मतः ॥ ६

एषाममीषां मध्ये तु किं **चिन्नैकमपि** प्रभो ।
मारो मयादि रोगादिर्माममात्माधितिष्ठतु ॥ ७

अयं भावो सदीयास्तु व्याधिर्मा ममदीश्वरः ।
माधि तिष्ठति माहिंसीरिति वा प्रार्थनं शिवे ॥ ८

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी ।**
**शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥**

याते रुद्र शिवा शान्ता तनूर्या विद्यते तया ।
जीवसे जीवितुं नोऽस्मान् मृडयानन्दयान्वहम् ॥ ९

विश्वाहभेषजीस्सर्वेष्वहस्स्वप्यव्यय प्रदा ।
यस्मादौषधवत्सैषा लोकद्रारिद्र्यनाशिनी ॥ १०

किं च रुद्रस्य तव या तनुः सा खलु भेषजी ।
मुक्तिदा स्मरणध्यानस्तुतिपूजादिभिर्नृणाम् ॥ ११

**इमाँ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् ।**
**यथा नः शमसद्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ।**

**इमां** मतिं जपध्यानस्तोत्रादि विषयां वयम् ।
**रुद्राय** पापसंहर्ते विभ्रम प्रभरामहे ॥ १२

विभ्रमोति प्रकर्षेण पोषयामोन्वहं मतिम् ।
**तवसे** बलयुक्ताय समर्थाय तपोबलम् ॥ १३

**कपर्दिने** विलासार्थं जटापटलशालिने ।
**क्षयद्वीरः** क्षीयमानो वीरा पापनिरस्य सः ॥
यद्वा क्षयन्ति नश्यन्ति वीरा यं **प्राप** सस्तथा ॥ १४

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यथाशमिष्टद्विपदे (च) नोऽङ्ग

(सु)संभवे पुष्टिमनातुश्च ।

विश्वं स्वखीयाऽखिल जीवजाता

द्ग्रामेस्थलेऽस्मिन्निहस्तथासत् ॥ १५

**मृडानो रुद्रो तनो मयस्कृधि**

**क्षयद्वीराय नमसा विधेम ते ।**

**यच्छं च योश्च मनुरायजे**

**पिता तदश्याम तव रुद्र प्रणीतौ ।**

मृडानो रुद्र हेरुद्र ! नोऽस्मान् मृडय पालय ।

उतापि च मयः सौख्यं नित्यं कृधि कुरुष्व नः ॥ १६

क्षयद्वीराय नमसा प्रणामेन विधेम ते ।

तुभ्यं परिचरेम त्वा नमस्कारो महेश्वर ॥ १७

मनुः पिता शं च सुखं च योश्च

दुःख प्रणाशश्च यदा यदा यजे ।

यद्दत्तवान्रुद्रतव प्रणीतौ

स्नेहे तदश्याम तदश्नुधीमहि ॥ १८

हेरुद्र शं पिता त्रात मनुसृष्ट यदा यजे ।

दत्तवान् तावदश्याम प्रणीतौ प्रणवेन वा ॥ १९

सृष्टा भवाभिदो रुद्रस्तेनयद्दत्तमस्ति शं ।

तदश्यामः प्राप्नुयामस्तवरुद्र प्रणीतितः ॥ २०

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

अत्ररुद्रो भवत्वादि धर्मानाक्रन्त एव सः ।
अत एव यजेत्युक्तिर्युक्तायुक्ता न सान्यथा ॥ २१

वर्णाश्रमादिभेदेन रुद्रमर्यादया यदा ।
यद्दत्तवान् तत्तथैवह्यश्यामत्वत्प्रसादतः ॥ २२

अत्राभिमुख्यातिशयद्योतनार्थकमेव हि ।
दिवामपि च रुद्रेति पदसंकीर्तनं मतम् ॥ २३

**मा नो महान्तमुत मा नो अर्भकं**
**मा न उक्षन्तमुत मा ना उक्षितम् ।**
**मा नो वधीः पितरं मोत मातरं**
**प्रिया मा नस्तनुवो रुद्र रीरिषः ।**

महान्तमुत्कृष्ठगुणाढ्य**मर्भक**-
श्चो**क्षन्त**मारेचनदक्ष**मुक्षितम्** ।
गर्भे निविष्टं **पितरं** च **मातरं**
मान्यां च नोऽस्माकमुमेशमावधीः ॥ २४

सर्वत्राप्युतशब्दार्थ स्वपिनस्तनय प्रियाः ।
मारीरिष प्रहाराद्यैर्माहिंसीः किं तु पालय ॥ २५

**मा नस्तोके तनये मा न आयुषि**
**मा नो गोषु मा नो अश्वेषु रीरिषः ।**
**वीरान्मा नो रुद्र भामितो वधीर्ह-**
**विष्मन्तो नमसा विधेम ते ।**

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**तोके** पौत्रे च **तनये** पुत्रे **चायुपि** गोष्वपि ।
**अश्वेषु** यानदक्षेषु नोरस्माकं रुद्र मारिषः ॥ २६

**वीरान्विद्यादि**संपन्नान् पुत्रान्नो **रुद्र भामितः** ।
सञ्जाताधिकक्रोधस्सन् **मावधीर्**मा विनाशय ॥ २७

**हविष्मन्तो** हविर्युक्ता विधेम **नमसा** त्वते ।
तुभ्यं परिचरेम त्वा प्रणामैरर्चयामहे ॥ २८

**आरात्ते गोघ्न उत पूरुषघ्ने**
**क्षयद्वीराय सुम्नमस्मे ते अस्तु ।**
**रक्षा च नो अधि च देव**
**ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः ।**

**गोघ्ने** गोघ्नस्य यद्रूपं **पुरुष**स्तस्य चास्ति यत् ।
तदारादस्तु तन्मास्तु तन्माविरस्तुमत्पुरा ॥ २९

**क्षयद्वीरो**स्तु ते सूक्तं स्वरूपमिति सौख्यदम् ।
यत्तदस्मात्पुरोस्माकं अस्तु रक्षा च रक्षणम् ॥ ३०

किञ्चाधि**ब्रूहि** देवास्मान् इतरेभ्योधिकान्वद ।
अयं भावो वद स्वामिन्नस्मान्वेष्ठा भवत्विति ॥ ३१

अथवापि च नोऽस्मभ्यं द्विसंस्काराश्रयश्चयत् ।
नित्यं सुखं यत्प्रायच्छ**द्विबर्हशर्म**ना भृशम् ॥ ३२

आमुष्मिकं चैहिकञ्च सद्विबर्हस्तथा सती ।
द्विबर्हाश्शर्वनो यश्च देहीत्यप्यस्तु योजना ॥ ३३



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यद्वा द्वयोः स्वर्गमनुष्यलोकयोः
यथोचितं वर्धयता द्विबर्हाम् ।
शिवस्तथा चार्हतु चेद्विबर्हो
नश्शर्मयश्चेति मतैव योजना ॥ ३४

**स्तुहि श्रुतं गर्त सदं युवानं**
**मृगं न भीममुपहत्नुमुग्रम् ।**
**मृडा जरित्रे रुद्र स्तवानो**
**अन्यं ते अस्मन्निवपन्तु सेनाः ।**

**स्तुहिश्रुतं गर्तसदं** हृदयाभ्यन्तरे स्थितम् ।
**युवानं** नित्यतरुणं स्मरतो मद्वचशिशवम् ॥ ३५

**मृगं न भीमं** मृगवत्सिंहवद्भयकारणम् ।
**उपहर्तुं** जगत्सर्वं प्रलये समुपस्थिते ॥ ३६

सम्हर्तु**मुग्रदु**ष्प्रेक्ष्यं महाभैरवरूपिणम् ।
यद्वोग्रं मृत्युसदृशमप्रधृष्यबलान्वितम् ॥ ३७

**मृडाजरित्रे**ऽस्मिमां (न्मां) जनितारं विशेषतः ।
**स्तुवानं** स्तूयमानस्त्वं हे **रुद्र** मृडतोषय ॥ ३८

यद्वा **रुद्रस्तवान**स्त्वं स्तूयमानो मया मम ।
जरित्रे क्षीयमानेऽस्मिन् शरीरे मृड शं कुरु ॥ ३९

स्तेनास्ते तव रुद्रास्मदस्मत्तो**न्यम**शं कुरु ।
**निवपन्तु** विशेषेण नाशयन्तु त्वदाज्ञया ॥ ४०

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य**

**दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यस्तनुष्व**

**मीढ्वस्तोकाय तनयाय मृडय ।**

रुद्रस्य हेतितच्छस्त्रं जोस्मान् परिवृणक्तु नः ।

परिवर्जय इत्युक्त्वा शिवद्रोहिषु गच्छतु ॥ ४१

क्रोधः प्रज्वलितस्तेषु स्तरस्याघायो जिघांसतः ।

दुर्मतिं निग्रहज्ञानं पतत्परिमणक्तु नः ॥ ४२

मघवद्भ्यो निवेद्यान्नं बिल्ववद्भ्यः स्थिरां मतम् ।

तामाश्ववतनुष्वद्भ्यस्तामीशापनयाद(र)ात् ॥ ४३

समशब्दो निवेद्यान्न बिल्वयागादिवाचकः ।

श्रीमच्छिवरहस्यादौ प्रयोगाः सन्ति तादृशाः ॥ ४४

स्थिरोऽस्थिरतनुस्तेभ्यो वतनुश्वापसारया ।

कुरुष्वावत्ततज्यं तत्तेभ्यश्शिथिलयेति वा ॥ ४५

कामाभिवर्षको मीढ्वस्तोकाय तनयाय च ।

अस्मत्पौत्राय पुत्राय मृडशे (शं च) सुकं कुरु ॥ ४६

**मीढुष्टम शिवतम शिवो नः सुमना भव**

**परमे वृक्ष आयुधं निधाय कृत्तिं वसान**

**आचर पिनाकं बिभ्रदागहि ।**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

हे मीढुष्टम ! हे प्रभो ! शिवतम स्वच्छप्रशान्ताकृते
नोऽस्मभ्यं सुमनश्शिवो भव शिव शान्तः प्रसन्नो भव ।
किं चादृश्यतमेत एव परमे वृक्षे निधायायुधम्
निक्षिप्याचर कृत्तिमुत्तमतमं वा नो वसानो.ध्रुना ॥ ४७

किञ्चागच्छ महादेव पिनाकं बिभ्रदागहि ।
यतः पिनाकं शुभदं अभयं नः स्वरूपतः ॥ ४८

**विकिरिद विलोहित नमस्ते अस्तु भगवः ।**
**यास्ते सहस्रँ हेतयोऽन्यमस्मन्निवपन्तु ताः ॥**

हिंसन्ति विविधान् जन्तून् ये ते विकरयः स्मृताः ।
ततो विकिरदस्तेषां दाता खण्डयिता स्मृताः ॥ ४९

यद्वा धनादिकिरयो धनदः किरिदः स्मृतः ।
ततश्शिवो विकिरदो विशेषेण धनप्रदः ॥ ५०

विलोहितो विशेषेण लोहितः कनकाकृतिः ।
यस्मादष्टाक्षरध्याने कनकाभो विचिन्त्यते ॥ ५१

यद्वा विलोहितश्चेतो महेशो गतलोहितः ।
यतः पञ्चाक्षर ध्याने ध्येयो मुक्ताधिकप्रभः ॥ ५२

यद्वा निनष्टं लौहित्यं कालुस्यं यस्य स स्वयम् ।
विलोहितो निर्विकार इति वास्तु विलोहितः ॥ ५३

भगवो भगवन्स्वामिन् अनन्तैश्वर्यसंयुतः ।
नमस्तेऽस्य प्रणामोऽस्तु ते नमस्याय भक्तितः ॥ ५४

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सहस्रं हेतयो यास्तास्तेऽस्मदन्यमशाङ्करम् ।
निवपन्तु विशेषेण पीडयन्तु यथोचितम् ॥ ५५

**सहस्राणि सहस्रधा बाहुवोस्तव हेतयः ।**
**तासामीशानो भगवः पराचीना मुखा कृधि ।**

सहस्रधा धनुष्टङ्कशूलखड्गादिभेदतः ।
ताः सहस्रप्रकारास्ताः सहस्राणीति मन्महे ॥ ५६

मुखा मुखानि शल्यानि पराचीना कृधि प्रभो ।
परान्मुखानि कुरुतादस्मत्तः करुणानिधे ॥ ५७

यस्मात्वमन्यताकर्तुमकर्तुं कर्तुमेव वा ।
समर्थोऽतस्तथा तानि कुरु श्रीमन्महेश्वर ॥ ५८

शम्भो भवानपि कदाचिदचित्स्वचिह्नं
त्यक्त्वा तु मां मनसि माविश माविवेश ।
त्वत्तो मदीयमशिवं शिवचिन्हहीनं
मत्त्वाभवन्तमपि किं न तिरस्करोति ? ५९

दशमोप्यनुवाकोऽयं महापातकपावकः ।
अहोबलेन व्याख्यातशिवनामसुधाशिना ॥ ६०

**इति श्रीमदहोबलकृत श्लोकरूप श्रीरुद्रभाष्ये**
**दशमोनुवाकः ॥**



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ एकादशोऽनुवाकः ॥

**सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् ।**
**तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ।**

## ॥ ध्यानम् ॥

यन्नारायणमौलिरत्नविलसत्कोटीरकोटिप्रभा
पुञ्जापिञ्जरितं विरिञ्चिमकुटश्रेणीसमालिङ्गतम् ।
यल्लक्ष्मीरमणातिहृद्यविलसन्नेत्रारविन्दार्चितं
तं नित्यं त्रिपुरारिराजच्चरणद्वन्द्वं भजामो मुदा ॥ १

अधिभूम्यां भूमिभागे सहस्राणि सहस्रशः ।
सहस्रपरिमाणास्ते संङ्घेसङ्घे सहस्रशः ॥ २

रुद्रा ये सन्ति तेषां तु धन्वान्यस्मदपेक्षया ।
सहस्रयोजने यानि तान्यपीशाय तन्मति ॥ ३

अवतन्वस्यवतत ज्याकानि विदधीमहि ।

**अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ।**

अयंभावः प्रसन्ने तु त्वयि किं दुष्करं प्रभो ॥ ४

अस्मिन् दृग्विषये नवैर्नवनिभे पौढेन्तरिक्षेमह-
त्यन्त्यत्न्तं विततेऽधि विस्तृतया ये वर्तमाना भवः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तेषां यानि सहस्रयोजनमते तेशेऽपि धन्वानि ता-
न्यज्यैवाशु भवावधिन्मसिगतज्याकानि कुर्मो वयम् ॥ ५

**नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।**

नीलग्रीवा नीलवर्णा ग्रीवा ये ते तथाविधाः ।
शुभ्रकण्ठैक भागास्तु शितिकण्ठा इति स्मृताः ॥ ६

उक्तः शर्वपदार्थः प्रागेते योधाः क्षमाचराः ।
भूमेरधस्थपाताले सञ्चरन्तो निजेच्छया ॥ ७

तेषामित्यादिकस्यात्र क्वनुद्रागो यथोचितम् ।

**नीलग्रीवाः शितिकण्ठा दिवँरुद्रा उपश्रिताः ।**

नीलग्रीवादि चोक्तार्थः दिवं रुद्रा उपश्रिताः ॥ ८

उप व्याप्य प्रभुत्वेन दिवं स्वर्गं समाश्रिताः ।

**ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ।**

ये वृक्षेषु प्रसिद्धेषु रुद्राः सस्पिञ्जरा स्थिता ः ॥ ९

सस्या बालतृणं तद्वत्पिञ्जरा हरिता स्वतः ।
विलोहिता लोहितेति लोहिता इति मन्यताम् ॥ १०

यद्वा विलोहितात्यन्तं नाशिताऽखिलकल्मषाः ।

**ये भूतानामधिपतयो विशिखासः कपर्दिनः ।**

अन्तर्हितशरीरा ये लोकोपद्रवकारिणः ॥ ११

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तेषां प्रकाशका ये ते भूताधिपतयः स्मृताः ।
अथवा पञ्चभूतानां प्रेतानां वा प्रकाशकाः ॥ १२

भूताधिपतयो यद्वा प्राणिमात्रप्रशासकाः ।
विशिखासश्शिखाहीना यद्वा विवशरश्मयः ॥ १३

अथवा विविधा येषां शिखास्ते तादृशा मताः ।
ये तु बद्धजटाजूटास्त एव हि कपर्दिनः ॥ १४

**ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।**

अन्नेषु[1] भुज्यमानेषु स्थितास्सन्तो जनान् खलान् ।
ये विविध्यन्ति . . . या तु प्रस्खलनादिना ॥ १५

पात्रेषु पानयोग्येषु घृतक्षीरादिषु स्थिताः ।
ये विविध्यन्ति रोगाद्यैः पिबन्तः पापिनो जनान् ॥ १६

**ये पथां पथिरक्षय ऐलबृदा यव्युधः ।**

**येषा**[2]मित्यनुषंगोऽत्र ये पथां पथिरक्षयः ।
पन्थानो वैदिकामार्गाः केचित्केचन लौकिकाः ॥ १७

तेषां प्रवर्तका रुद्राः रक्षकाः पथिरक्षयः ।
उक्तमार्गद्वयस्यापि रक्षकास्ते यथायथम्[3] ॥ १८

प्रवर्तयितुमीशाना जीवमार्गद्वयेऽपि ते ।
तथापि वैदिके मार्गे शिवपूजात्मिके द्विजान् ॥ १९

---

1. अन्येषु – पा. भे ॥ 2. तेषां – पा. भे. 3. यथा तथा – पा. भे.

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रवर्तयितुमीशाना द्विजाराधनतोषिताः ।
अन्या च वैदिके मार्गे प्रवर्तयितुमीश्वराः ॥ २०

तत्तत्कुकर्म संक्षुब्धाः कुकर्मफलसिद्धये ।
इलमन्नं तत्समूह स्वैरमैलं तदेव हि ॥ २१

तथा चैलबृदा रुद्रा सर्वेप्यैलबृदा स्मृताः ।
देहाद्या येन यूयंते मिश्रयन्ते सयुस्सुतुः ॥ २२

आयुस्तद्रुपहर्तारो व्युधाः प्राणहारकाः ।
युवभिः सहयुध्यन्ते इति वा यव्युधास्स्मृताः ॥ २३

यद्वा ये तु युभिरस्साकं युध्यन्ते ते तु यव्युधाः ।
यः शत्रून् यौति संयोज्य वैरं साधयतीति युः ॥ २४

तथा भया व्युधा रुद्राः सर्वानिष्टनिवारकाः ।

**ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ।**

ये तीर्थानि शिवक्षेत्राण्यशेषाणीति मन्यताम् ॥ २५

प्रचरन्ति सृकावन्तः शस्त्रवन्तो निषङ्गिणः ।
निषङ्गिणः खड्गयुक्तास्तेषामित्यदि पूर्ववत् ॥ २६

**य एतावन्तश्च भूयाँसश्च दिशो रुद्रा वितस्थिरे ।**
**तेषाँ सहस्रयोजनेऽव तन्वानि धन्मसि ।**



CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एतावन्तः सहस्राणि सहस्रश इति स्मृताः ।
भूयांसस्तु तेप्यन्ये संख्या एषां न विद्यते ॥ २७

दिशोवतस्थिरे सर्वा दिशः संविश्य संस्थिताः ।

**नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे**
**ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो**
**दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीची-**
**र्दशोध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते ये**
**द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ।**

रुद्राः प्रशासकाः क्रूराः तेषामित्यादि पूर्ववत् ॥ २८

पृथिव्यादिषु ये रुद्राः स्थितास्तेषां यथाक्रमम् ।
इषवोन्नादिकं तेषां तद्यस्मादिषु कार्यकृत् ॥ २९

अभक्षान्नं भोजयित्वा पापमुत्पाद्य तेषु तत् ।
अन्नेषुभिर्विविध्यन्ते रुद्राः केचित् क्षितौ स्थिताः ॥ ३०

अन्तरिक्षे स्थिता रुद्रा रोगमुत्पाद्य वायुभिः ।
विविध्यन्ति जनान्दुष्टान् ये ते वातेषयोऽहिते ॥ ३१

रुद्रादिभिस्थिता जन्तूनतिवृष्ट्या कदाचन ।
विविध्यन्ति ततस्ते तु रुद्रा वर्षेषवस्मृताः ॥ ३२

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एतादृशेभ्यो रुद्रेभ्यो नमस्कारः स कीदृशः ।
दिशःप्राची तथान्यासुदिक्ष्वभित्यभिमन्यताम् ॥ ३३

क्रियते प्राङ्मुखत्वेन यदा येनाञ्जलिस्तदा ।
यतो भवन्ति प्रागग्रा दशाप्यङ्गुलयो मताः ॥ ३४

दिशः प्राची दशप्राच्योः प्राङ्मुखाङ्गुलयो दश ।
एवं प्रतिदिशं ताभिः क्रियतेंगुलिभिर्नराः ॥ ३५

एतादृशो नमस्कारस्तेभ्यो स्वयमधापहः ।
ते तथा प्रणता रुद्रा प्रसिद्धा मृडयन्तु नः ॥

सुखयन्तु विशे षेण नोऽस्मान्पुत्रादि संयुतान् ॥ ३६

ते यद्विष्मो यश्चनो द्वेष्ठितं वो
जम्भे जविभा(ष्वास्या) ष्वास्य मध्येषु यद्धा ।
जम्भे वक्त्रे प्राक्तदन्ते वयं ते
रुद्रध्यान प्रीत्यपीर्या[1] (वाया) विदध्मः ॥ ३७

## ॥ ध्यान श्लोकः ॥

यद्धान्दारु(र)मुकुन्दसुन्दरशिरोलंकाररत्नस्फुरत् -
कान्तिव्राजविराजमानविचरद्दीपावली राजितम् ।
यच्चन्द्रेन्द्रपुरोगमामरनुतं वेदान्तवाक्यस्मृतं
तं नित्यं त्रिपुरारिराजचरणद्धन्द्धं भजामो मुदा ॥ ३८

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एकादशोऽतिपापघ्नोऽनुवाको विवृतोखिलः ।

अहोबलेन सुधिया शिवस्सन्तुष्ट हेतुना ॥ ३९

एवं सर्वमहोबलेन वशिना श्रीरुद्रभाष्यं कृतम्

श्रीमद्भास्करवंशजेन ललितश्लोकैश्शिवप्रीतये ।

श्रीविश्वेश्वर दिव्यपादकमलध्यानप्रणामार्चन-

स्तोत्राराधन चिन्तनादिनिरतस्वान्तेन शुद्धात्मना ॥ ४०

व्याख्या श्रीमदहोबलेन रचिता श्रीभास्करीयेण या

श्रीविश्वेशपदारविन्द निरतस्वान्तादिसन्तोषता ।

व्याक्या '**कल्पलता**' मनोज्ञफलदा संशीलतां सादरं

मत्कृत्यस्तु मयाकृतं मम विभोःकृत्यन्तु नातः परम् ॥ ४१

यन्मे मानसमैशपादकमले भक्तया मयैवार्पितं

सर्वस्वं मम एवमेतदितरं नास्त्येति(नास्तीति) जानाम्यतः ।

त्र्यक्षाक्षामक्षमनाथनाथकरुणासिन्धो प्रसन्नो भव

हन्त्येनांसि निहन्ति चान्तकभयं हन्त्यापदे(दं) वैरिणो(णः) ॥

हन्त्यार्तिश्च तथापकीर्तिकृती दैन्यज्ञता दुर्धियौ

शोभा प्रभाववैभवा भव शुपारंभैकभूर्मो प्रभो ।

शम्भो शाम्भवभावभक्तिभगवत्पादारविन्दस्मृतिः

... ... ... ... ... ... ... ... ... ... ... ॥ ४३

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

भो शम्भो करुणाम्भोधे त्वपादांबुरुहे मम ।
स्वान्तं संवसतु स्वामिन् मया त्वन्यत्र सर्वथा ॥ ४४

**इति श्रीमत्सकललोकप्रसिद्ध श्रीमद्भास्करवंशरत्नसम्भूत श्रीमन्नृसिंह(भट्ट)
महोपाध्याय हृदयानन्दसुधाकरकलासंबन्धार्केन रामक्कागर्भसंभूत
प्रणमत्सुरासुरमौलिदिव्यरत्नकोटीरकोटिप्रभापूरपूरित श्रीविश्वेश-
दिव्यचरणारविन्दमकरन्दसन्दोहान्दोळितदिव्याश्चित-
चञ्चरीकेणाहोबलेन विरचितं श्लोकरूपं**

**॥ श्रीरुद्रभाष्यं संपूर्णम् ॥**

Colophon : **नलनामसंवत्सरे कार्तिकमासे** *10 உ எழுதினது.*



CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# BIBLIOGRAPHY

1. Sri Rudra Bhashyam (Tamil)
   Ed. R. Muthukrishna Sastrigal

2. Sri Rudra Bhashyam, Aanadasrama publication
   Ed. Harinarayana Apte. A. D. 1935

3. Sri Rudra Bhashyam by Skanda Deva
   Pub: Amrutavani pracharini Sabha
   Bombay, 1978

4. History of classical Sanskrit Literature
   by M. Krishnamachariar, 1937

5. Sources of Vijayanagara History
   by S. Krishnswami Ayyangar, M. A., 1919

6. Samskrita sahitya vimarsah
   by Dwijendra Nath Acharya

7. The Journal of Oriental Research, Madras Vol. XIV part I
   by Dr. V. Ragavan

8. Reports on Sanskrit Mss. of Southern India Vol. III
   by E. Hulzsch

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

9. New Catalogues Catalogorum, University of Madras, 1969 by Dr. V. Ragavan

10. Descriptive Catalogue of Sanskrit Manuscripts of Adayar Library, Vol. I

11. Descriptive Catalogue of Sanskrit Manuscripts of the Govt. Oriental Manuscripts Library, Madras.

12. Descriptive Catalogue of Sanskrit Manuscripts of the Mysore. Vol. I

13. Descriptive Catalogue of the Central Library of Baroda. Vol. I



CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# AN APPEAL

Manuscripts on Palmleaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The Manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar King of Tanjore, **Rajah Serfoji,** has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world famous **"Sarasvati Mahal Library".** It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**DISTRICT COLLECTOR AND DIRECTOR**
**Sarasvati Mahal Library,**
**Thanjavur.**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

